# HARIDÂS SANSKRIT SERIES;

A

COLLECTION OF RARE SANSKRIT WORKS.

NO. 1.

श्रीगौडपादाचार्यकृतमाण्डूक्यकारिकाव्याख्या

# मिताक्षरा ।

श्रीमत्परमहंसपरिव्राजकाचार्यस्वयम्प्रकाशानन्द-

सरस्वतीस्वामिकृता ।

शंकरानन्दकृतमाण्डूक्योपनिषद्दीपिका च ।

वेदान्तपरिनिष्ठितप्रज्ञ-श्रीप्रज्ञानानन्दसरस्वतीस्वामिपरिष्कृत-

पुस्तकानुसारेण रत्नगोपालभट्टेन संशोधिता ।

MITÂKSHARÂ,

A GLOSS ON

ŜRI GAUDAPÂDA ÂCHÂRYA'S MANDÛKYA KÂRIKAS,

BY

SWAYAM PRAKÂŜANANDA SARASWATÎ SWAMI.

AND MANDÛKYOPANISHADA DIPIKÂ OF ŜANKARÂNAND,

EDITED BY

Pandit Ratna Gopâla Bhatta.

*PUBLISHED BY HARIKRISHNA DÂS & BROS.*

PROPRIETORS, CHOWKHAMBÂ SANSKRIT BOOK DEPÔT.

BENARES.

*... Ha... hna Dâs Gupta Proprietor,*

...शीमरणजन्या मुक्तिर... चतुर्ध...

...क्तिकोपनिषदि-

... VILÂSA PRESS.

...ES.

दुराचाररतो वाऽपि मन्नामभजनात्

सालोक्यमुक्तिमाप्नोति, न तु लो...

काश्यां तु ब्रह्मनालेऽस्मिन् मृ... *to Act XXV. of 1867.*

श्रीगणेशाय नमः ।

# भूमिका ।

—:०:—

अहोऽनिर्वचनीयानादिमायाविलासभूतदुःखप्राये संसारे धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थेषु यथायथं नित्यसुखेच्छया सर्वदुःखजिहासया च स्वस्वाऽनादिकर्मादिवासनया प्रवृत्ताः सर्वेऽपि जीवा दृश्यन्ते । तन्निवृत्त्यर्थं तदधिष्ठानं निर्विशेषमेकमेवाऽद्वितीयं ब्रह्माऽप्यस्ति श्रुतिषु प्रतिपादितम् । तत्प्रतिपादिका उपनिषदश्च सन्ति । उपनिपूर्वकं, षद्लृ विशरणगत्यवसादनेष्विति धातोः क्विपि प्रत्यये उपनिषद्रूपमिति सिद्ध्यति । उपशब्दः सामीप्यमाचष्टे । सङ्कोचकाभावात्तच्च प्रत्यगात्मनि पर्यवस्यति । निशब्दो निश्चयवचनः । तथाच सामीप्यतया निश्चयेन ब्रह्मात्मैक्यं सादयति बोधयति, रागादीन् शिथिलयति, सर्वक्लेशान्नाशयतीत्युपनिषद् ब्रह्मविद्या । तत्साहचर्याद् ग्रन्थोऽप्युपनिषदिति । तथापि तत्त्वं दुर्ज्ञेयमालक्ष्य नानावासनाऽनुसारेण चाधिकारिभेदेन नानाविधानि शास्त्राणि महर्षिभिः प्रकाशितानि जीवानां क्रमेण नित्यसुखावाप्तये सर्वदुःखनिवृत्तये चेति ।

तत्र पूर्वोक्तेषु पुरुषार्थेषु मोक्ष एव परमः पुरुषार्थः । तत्र मोक्षोऽप्यनेकविधः सारूप्यादिभेदेन अधिकारिभेदाच्च मुक्तिकोपनिषदि निरूपितः । तथाहि— सालोक्यादिविभागेन चतुर्धा मुक्तिरीरितेति । परन्तु कैवल्यमुक्तिरेकैव परमार्थस्वरूपिणी । सा तु ब्रह्मात्मैक्यज्ञानादेव । तदुक्तं, ज्ञानादेव तु कैवल्यम्, ज्ञात्वा देवं सर्वपाशापहानिः, नान्यः पन्था विद्यतेऽयनाय, यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः * तदा देवमविज्ञाय दुःखस्यान्तो भविष्यतीत्यादिप्रामाण्यात् । चतुर्विधा तु मुक्तिरुपासकानामीश्वरोपासनया भवति । तथैव च काशीमरणजन्या मुक्तिरपि चतुर्विधमुक्तावन्तर्भवति । तथाचोक्तं मुक्तिकोपनिषदि—

दुराचाररतो वाऽपि मन्नामभजनात् कपे ।
सालोक्यमुक्तिमाप्नोति, न तु लोकान्तरादिकम् ॥
काश्यां तु ब्रह्मनालेऽस्मिन् मृतो मत्तारमाप्नुयात् ॥

ततश्च, तारकार्थब्रह्मात्मैक्यज्ञानात् पुनरावृत्तिरहितां मुक्तिं प्राप्नोति निश्चितं मानवः ॥

यत्र कुत्राऽपि वा काश्यां मरणे स महेश्वरः ।
जन्तोर्दक्षिणकर्णे तु मत्तारं समुपादिशेत् ॥
निर्धूताऽशेषपापौघो मत्सारूप्यं भजत्यसौ ।
सैव सालोक्यसारूप्यमुक्तिरित्यभिधीयते ॥
सदाचाररतो भूत्वा द्विजो नित्यमनन्यधीः ।
मयि सर्वात्मके भावो मत्सामीप्यम्भजत्ययम् ॥
सैव सालोक्यसामीप्यसारूप्या मुक्तिरिष्यते ।
गुरूपदिष्टमार्गेण ध्यायन् मद्गुणमव्ययम् ॥
मत्सायुज्यं द्विजः सम्यग् भजेद् भ्रमरकीटवत् ।
सैव सायुज्यमुक्तिः स्याद् ब्रह्मानन्दकरी शिवा ॥
चतुर्विधा तु या मुक्तिर्मदुपासनया भवेत् ।
इयं कैवल्यमुक्तिस्तु ज्ञानादेव हि लभ्यते, इति ॥

सा केन क्रमणेति मारुतिप्रश्ने, श्रीरामस्योत्तरम् । निष्कामतया ईश्वरबुद्ध्या श्रौतस्मार्तकर्मणि कृते, निषिद्धे कर्मणि वर्जिते सति । नाऽविरतो दुश्चरितादिति श्रुतेः । निष्कामतया च परमेश्वरोपासनायां सत्यां सच्छास्त्रोक्तप्रकारेण, न तु स्वकपोलकल्पनया । ब्रह्मनिष्ठसद्गुरूपसत्त्या विवेकादिचतुष्टयसाधनपूर्वकं षड्विधतात्पर्यबोधकलिङ्गसहितेनाऽसाधारणवेदान्तश्रवणादिना, महावाक्यार्थयथार्थसाक्षात्कारेण, ब्रह्मात्मैक्याऽपरोक्षबोधेनैव । कैवल्यमुक्तिर्नाम केवलीभावः स्वरूपस्थितिः, परमानन्दावाप्तिः सकलदुःखनिवृत्तिर्भवति, नान्यथा । तथाचोक्तं भागवते– मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिरिति । हित्वा नाम अविद्यादिद्वैतं प्रबाध्य । बाधो नाम ब्रह्मव्यतिरिक्तस्य त्रैकालिकात्यन्ताऽभावनिश्चयः । तथाचोक्तं वार्त्तिककारेण सुरेश्वराचार्येण–

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यतीति ॥

सर्वबाधे शुद्धाऽद्वैतमेव ब्रह्मास्ति । सैव कैवल्यमुक्तिरिति एतद् ब्रह्मनिष्ठसद्गुरुतो निश्चित्येति भागवतवाक्यार्थ इति यावत् ।

तत्रोपनिषदश्चापि शाखाभेदेनाऽनेकविधाः सन्ति । तासामेव नाम ज्ञानकाण्डं, वेदान्तो, ब्रह्मविद्या, अध्यात्मविद्या, पराविद्या, वेदान्तदर्शनं, ब्रह्मसूत्राणि इति । ब्रह्मविद्याप्रतिपादकत्वाद् ग्रन्थोऽपि वेदान्तादिः कथ्यते ।

तत्रापीशावास्यादिदशोपनिषदः प्रधानाः । तास्वपि माण्डूक्योपनिषदेव मुख्या उत्तमाधिकारिणां परमहंसपरिव्राजकानामर्थे । तथाचोक्तं मुक्तिकोपनिषदि–

माण्डूक्यमेकमेवालं मुमुक्षूणां विमुक्तये ।
तथाप्यसिद्धं चेज्ज्ञानं दशोपनिषदं पठ ॥
ज्ञानं लब्ध्वाऽचिरादेव मामकं धाम यास्यसि, इति ॥

ज्ञानमत्र ब्रह्मात्मैक्यमेव विवक्षितं, न तु भेदज्ञानम् । तस्य राजसत्वात् त्याज्यत्वम् । तथाचोक्तं भगवता श्रीकृष्णेन–

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥

कर्मणि समाप्यते, भक्तौ समाप्यते इति नोक्तं भगवता । एतेन भक्तिकर्मणी मोक्षस्य परम्परया अन्तःकरणशोधनैकाग्र्यद्वारा साधने ब्रह्मात्मैक्यज्ञानं तमोनिवर्तकत्वेन साक्षात्साधनमिति ध्वनितम् ।

तदधिकार्यपि मुख्यः संन्यासी परमहंस एव । तस्या माण्डूक्योपनिषदो मन्त्रा द्वादश सन्ति । तदुपरि भगवतो गौडपादाचार्यस्य कारिकास्तदर्थाविष्करणरूपाः सन्ति । तदुपरि च श्रीभगवतः श्रीशङ्करावतारपूज्यपादशङ्कराचार्यवर्यस्य मुमुक्षुजनमनोहरं भाष्यमस्ति । तच्छायामाश्रित्य यथार्थाविष्करणरूपा माण्डूक्यकारिकावृत्तिर्मिताऽक्षरानाम्नी श्रीमत्परमहंसपरिव्राजकाचार्यस्वयम्प्रकाशानन्दसरस्वतीस्वामिपूज्यपादकृतास्ति ।

द्वादशमन्त्राणामुपरि च शङ्करानन्दसरस्वतीस्वामिना कृता दीपिकाभिधाना वृत्तिरस्ति ।

एतद्वृत्तिद्वयपठनपाठनेन झटिति भाष्यार्थोऽवबोधयितुं शक्यत इति कृत्वा सर्वमुमुक्षूपकाराय चौखम्बासंस्कृतसिरीजाध्यक्ष श्रेष्ठि हरिदासात्मज हरिकृष्णदासेन निजविद्याविलासनाम्नि यन्त्रे मुद्रयित्वा प्रकाशिता इति ।

धन्या महात्मानो यदहर्निशं जनोपकाराय प्रयतन्ते स्ववचन-सुधया च मुमुक्षून् परमकृतकृत्यतां प्रापयन्तीति शम् ।

सर्वमुमुक्षुपरमहितैषी वेदान्तनिष्ठः
प्रज्ञानानन्दसरस्वतीस्वामी
कैवल्यधाममठनिवासी
काशी ब्रह्माघाट

अथ मिताक्षरासहित–गौडपादीयमाण्डूक्यकारिकाविषयसूची ॥

इति वैतथ्यप्रकरणं द्वितीयम् ॥ २ ॥

इत्यलातशान्तिप्रकरणं चतुर्थकम् ॥ ४ ॥

## अथ सवृत्तिकमाण्डूक्योपनिषद्विषयसूची ।



( इति शङ्करानन्दीयवृत्तिसहितमूलमाण्डूक्यविषयसूची )

श्रीगणेशाय नमः ॥

अथ आचार्यश्रीभगवद्गौडपादविरचित-
माण्डूक्योपनिषत्कारिकाव्याख्या

# मिताक्षरा ।

हरिः ॐम् ॥

अस्ति प्रत्यगुपाधिवर्गविधुरं शुद्धं परं भास्वरं
पूर्णानन्दमपास्तभेदविभवं ब्रह्मेति निर्ज्ञायते ॥
तस्मिन्नस्मि सदा निषण्णधिषणो धीशब्दयोनौ पदे
वेदान्तैरधिगम्यमानमहिमन्यात्मावबोधे मयि ॥ १ ॥

वेदान्तार्थसारसंग्रहभूतमिदं प्रकरणचतुष्टयम् ॐमित्येतदक्षरमित्याद्यारभ्यते। तत्र यान्येव तु वेदान्ते सम्बन्धाभिधेयप्रयोजनानि तान्येवेह भवितुमर्हन्ति । तथापि प्रकरणव्याचिख्यासुना सङ्क्षेपतो वक्तव्यानि । तथाहि । प्रयोजनसम्बद्धं शास्त्रं साधनाभिव्यञ्जकत्वेन । तच्च द्विविधं, सुखाभिव्यक्तिरनर्थापध्वस्तिश्च । ब्रह्मविद् ब्रह्मैव भवति, तरति शोकमात्मविदित्यादिश्रुतेरवगन्तव्यम् । विषयसम्बद्धं च प्रत्यग्ब्रह्मणोऽैक्यमज्ञातत्वेनाज्ञातं हि प्रमाणानां विषयो वादिनां मत इति हि वृद्धाः। सम्बन्धो नाम प्रतिपाद्यप्रतिपादकत्वम् । तं त्वौपनिषदमिति श्रवणात् । तत्कामस्त्वधिकारी । यदिच्छन्तो ब्रह्मचर्यं चरन्तीति श्रुतेः । भवति हि यो यत्कामी स एव तदधिकारीति सर्वजनीनम् । एवं प्रयोजनादिप्रकार उपनिषत्पदव्युत्पादने तु दर्शितोऽन्यत्रेत्यलम् । सम्प्रति प्रकरणचतुष्टयस्यासङ्कीर्णो विषयो दर्शयितव्यो बुद्धिसौकर्याय । तत्रैवमोङ्कारनिर्णयाय प्रथमं प्रकरणमागमप्रधानमात्मतत्त्वप्रतिपत्त्युपायभूतम् । यस्य द्वैतप्रपञ्चस्योपशमेऽद्वैतप्रतिपत्तिः । रज्ज्वामिव सर्पादिविकल्पोपशमे रज्जुतत्त्वप्रतिपत्तिवत् । तस्य द्वैतस्य हेतुतो वैतथ्यप्रतिपादनाय द्वितीयं प्रकरणम् । तथाऽद्वैतस्यापि वैतथ्यप्रसङ्गप्राप्तौ युक्तितोऽतथात्वदर्शनाय

प्रकरणं तृतीयम् । अद्वैतस्य तथात्वप्रतिपक्षभूतानि यानि वादान्तराणि अवैदिकानि तेषामन्योन्यविरोधित्वादतथार्थत्वेन तदुपपत्तिभिरेव निराकरणाय चतुर्थं प्रकरणम् ॥

तदेवं प्रयोजनाद्यभिधाय प्रकरणानामसङ्कीर्णं विषयं च प्रदर्श्यारभ्यत इत्यत्र द्योतितां प्रतिज्ञां प्रकटयन्, ॐमित्येतदक्षरमित्यादि, सर्वस्य प्रभवाप्ययौ हि भूतानामित्यन्तेनोक्तो योऽर्थस्तस्मिन् प्रकाशकत्वेन, बहिरित्यादीन्—भोगार्थं सृष्टिरित्यन्तान् श्लोकानवतारयति—

अत्रैते श्लोका भवन्ति—

बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः ॥
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥ १ ॥

अत्रेति ॥ ॐमित्यादिश्रुतौ पादत्रये विश्वादिपदार्थान् क्रमेण दर्शयति ॥ बहिरिति ॥ देहाद् बाह्येषु स्थूलरूपादिविषयेषु वर्तमाना प्रज्ञा यस्य सोऽयं बहिःप्रज्ञो विभुरित्यध्यात्माधिदैविकयोरभेदेनावधेयम् । तथा तैजसप्राज्ञयोर्हिरण्यगर्भाव्याकृताभ्यामैक्यं द्योतयितुं हीत्युक्तम् । देहेन्द्रियाद्यतिरिक्तेषु वासनामयेषु रूपादिविषयेष्वासक्ता प्रज्ञा, पश्यामि शृणोमीत्येवंरूपा यस्य सोऽयमन्तःप्रज्ञस्तैजसस्तथा प्रज्ञानानां जाग्रत्स्वप्नबोधानां यत्रैकीभावः । सोऽयं प्रज्ञानघनः प्राज्ञः पर्यायेण त्रिस्थानत्वात् सोऽहमिति स्मृत्या प्रतिसन्धानाच्च स्थानत्रयव्यतिरिक्तत्वमेकत्वं शुद्धत्वमसङ्गत्वं च सिद्धमित्यभिप्रायेणाह ॥ एक एवेति ॥ केचित्तु, यो जाग्रति व्यवहरति तस्मादन्यः स्वप्ने चरति, यस्तु स्वप्ने व्यवहरति तस्माद्भिन्नः सुषुप्तिं गच्छति, तथाऽऽगमनक्रमेऽपि भिन्नोऽभिन्नश्चात्मावस्थाधर्मवानिति । तत्तुच्छम् । यद्यात्मनश्चैतन्यमिव स्वाभाविकं स्थानत्रयं तर्हि न व्यभिचरेद्, न तर्हि तद्वदेव तं व्यभिचरितुमर्हति । व्यभिचरति चात्मानं स्थानत्रयम् । क्रमाऽक्रमाभ्यां तस्य त्रिस्थानत्वादतस्तद्व्यतिरिक्तत्वमात्मनः सिद्धम् । सोऽहमिति प्रतिसन्धानान्महामत्स्यादिश्रुतेश्चोक्तलक्षणो युक्तोऽङ्गीकर्तुमित्यर्थः ॥ १ ॥

जागरितावस्थायामेवैकस्मिन्नेव देहे विश्वादीनां त्रयाणामनुभवप्रदर्शनेनैक्यमेव वस्तुतोऽस्तीति दर्शयन् भेदवादमपनुदति—

दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः ॥
आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥ २ ॥

दक्षिणेति ॥ दक्षिणमक्ष्येव मुखमुपलब्धिस्थानं, तस्मिन् प्राधान्येन द्रष्टा स्थूलानां विश्वोऽनुभूयते । इन्धो ह वै नामैव योऽयं दक्षिणेऽक्षन् पुरुष इतिश्रुतिर्दीप्तिगुणं वैश्वानरं चक्षुषि प्रदर्शनेनाध्यात्माधिदैवयोरैक्यमुपदिशञ्जागरिते विश्वं दर्शयतीति सर्वाविवादम् । दक्षिणाक्षीति विशेषणं दक्षिणाङ्गे वीर्यवद्व्यापारोपलब्धेरुक्तश्रुत्यनुग्रहाच्च द्रष्टव्यम् । यद्यपि देहदेशभेदे विश्वोऽनुभूयते तथापि कथं जागरिते तैजसोऽनुभूयत इत्याशङ्क्य द्वितीयं पादं व्याचष्टे ॥ मनसीति ॥ दक्षिणाक्षिगतो रूपं दृष्ट्वा निमीलिताक्षस्तदेव स्मरन्मनस्यन्तःस्वप्न इव वासनारूपाभिव्यक्तं पश्यत्यतो मनस्यन्तस्तु तैजसोऽपि विश्व एव । अत्रापि तैजसो हिरण्यगर्भ इति ध्येयः । मनोमयोऽयं पुरुष इति श्रवणात् । तृतीयं पादं व्याकुर्वञ्जाग्रत्येव सुषुप्तिं दर्शयति ॥ आकाशे चेति ॥ यो विश्वस्तैजसत्वमुपगतः स पुनः स्मरणाख्यस्य व्यापारस्य व्यावृत्तौ हृदयावच्छिन्नाकाशे स्थितः सन् प्राज्ञो भूत्वा प्राणात्मरूपाव्याकृतात्मना तिष्ठति । प्राणो ह्येवैतान् सर्वान् संवृङ्क्ते इतिश्रुतेरत्रापि प्राज्ञस्य प्राणात्मना व्याकृतेनैक्यं ध्येयम् । प्राणबन्धनं हि सोम्य मन इति श्रुतेरिति भावः । एकस्मिन्नेव देहे विश्वतैजसवत् प्राणात्मनः प्राज्ञस्यापि न किञ्चिदवेदिषमित्युत्थितस्य प्रत्ययदर्शनादेकस्मिन्नेव देहे जीवात्मभेदः केनापि नाभिमत इत्याह ॥ त्रिधेति ॥ २ ॥

विश्वादीनां त्रयाणां त्रिधा देहे व्यवस्थितिं प्रतिपाद्य तेषामेव त्रिधा भोगं निगमयति–

**विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् ॥**
**आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत ॥ ३ ॥**

विश्वो हीति ॥ एकोनविंशतिमुखैर्बुद्धीन्द्रियकर्मेन्द्रियप्राणपञ्चकमनोबुद्ध्यहङ्कारचित्ताभिधैः स्थूलान् रूपादिविषयान् भुङ्क्त इति स्थूलभुग् विश्व इत्यर्थः । तेजोवासनामयी प्रज्ञा यस्य सोऽयं तैजसः तैरेव द्वारैः प्रविविक्तान् वासनामयान् विषयान् भुङ्क्ते इति प्रविविक्तभुक् । तथा प्रज्ञप्तिमात्रमेव रूपं यस्य सोऽयं प्राज्ञ आनन्दस्वरूपाभिव्यक्तं सुखं भुङ्क्तेऽनुभवति । एवं त्रिधाभोगं निबोधत यूयमित्यर्थः ॥ ३ ॥

भोगप्रयुक्तां तृप्तिमधुना त्रेधा विभजते–

स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् ॥
आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं निबोधत ॥ ४ ॥

स्थूलमिति। तृप्तिर्हि दृष्टानुसारेण सुखाद्युत्पत्तिरित्यर्थः ॥ ४ ॥

प्रकृतभोक्तृभोग्यपदार्थद्वयपरिज्ञानस्यावान्तरफलमाह—

त्रिषु धामसु यद्भोज्यं भोक्ता यश्च प्रकीर्तितः ॥
वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥ ५ ॥

त्रिष्विति ॥ जाग्रदादिषु स्थूलप्रविविक्तानन्दाऽऽख्यं भोज्यमवान्तरभेदात् त्रैविध्यमपि भोज्यत्वेनैकत्वम्। यश्च विश्वतैजसप्राज्ञाख्यो भोक्तैकः एकत्वे युक्तिः। योऽहं सुषुप्तः सोऽहं स्वप्नं प्राप्तः। यश्च स्वप्नमऽद्राक्षं सोऽहमिदानीं जागर्मीति प्रतिसन्धानादज्ञानतत्कार्यं प्रति न जाने मम देहादिरिति द्रष्टृत्वाच्च प्रतिपादितः श्रुतिस्मृतिष्वित्यर्थः। द्वितीयार्द्धं विभजते ॥ वेदेति ॥ यो वेदैतदुभयं भोज्यभोक्तृतयाऽनेकधा भिन्नं स भुञ्जानो न लिप्यते। न हि यस्य यो विषयः स तेन हीयते वर्द्धते वा। न ह्यग्निः स्वविषयान् काष्ठादीन् दग्ध्वा हीयते वर्द्धते वेत्यर्थः ॥ ५ ॥

एष योनिरित्यत्र प्राज्ञस्य प्रपञ्चकारणत्वं प्रतिज्ञातम्। तत्र सत्कार्यमसत्कार्यं प्रति वा कारणत्वमिति सन्देहे निर्द्धारयितुमारभते—

प्रभवः सर्वभावानां सतामिति विनिश्चयः ॥
सर्वं जनयति प्राणश्चेतोंऽशून्पुरुषः पृथक् ॥ ६ ॥

प्रभव इति ॥ सतामधिष्ठानात्मना विद्यमानानां स्वेनाऽविद्याकृतनामरूपमायास्वरूपेणाविद्यमानानां सर्वभावानां विश्वतैजसप्राज्ञभेदानां प्रभव उत्पत्तिरिति वेदान्तेषु निश्चयो वर्त्तते इत्यर्थः। यदि ह्यसतामेव जन्म स्याद् ब्रह्मणोऽव्यवहार्यस्य ग्रहणद्वाराऽभावादऽसत्त्वप्रसङ्गः। दृष्टं च रज्जुसर्पादीनामविद्याकृतमायाबीजोत्पन्नानां रज्ज्वाद्यात्मना सत्त्वम्। न हि निरास्पदा रज्जुसर्पमृगतृष्णिकादयः क्वचिदुपलभ्यन्ते केनचित्। वक्ष्यति च वन्ध्यापुत्रो न तत्त्वेन मायया वाऽपि जायत इति। श्रुतिरपि वक्ति, ब्रह्मैवेदमात्मैवेदमग्र आसीदिति। तस्मात् सतामेवोत्पत्तिरिति भावः। तत्रावान्तरभेदमाह ॥ सर्वमिति ॥ पुरुषो हि सर्वमचेतनं जगदुपाधिभूतं तमःप्रधानं गृहीत्वा जनयति। अत एव पुरुषे कारणवाचि प्राणपदं प्रयुज्यते। स च चैतन्यप्रधानश्चेतसश्चैतन्यस्यांशव इव चेतो-

रूपा जलार्कसमा अग्निविस्फुलिङ्गसमाश्च प्राज्ञतैजसविश्वभेदेन देवतिर्यगादिदेहभेदेषु विभाव्यमानाश्चेतोंऽशवो ये ताँश्चेतोंऽशून् पृथग्विषयभावविलक्षणाँश्चितन्यत्वेन सलक्षणाञ्जीवान् पुरुषो जनयति । अत एव चिदात्मनो जनयितुस्तत्त्वतो जीवानां न भिन्नत्वं जलपात्रप्रतिबिम्बिताऽऽदित्यादीनां बिम्बभूतात्तत्त्वतो भेदाभावादित्यर्थः ॥ ६ ॥

चेतनाचेतनात्मकस्य जगतः सर्गे प्रस्तुते स्वमतविवेचनार्थं मतान्तरमुपन्यस्यति

विभूतिप्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ॥
स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥ ७ ॥

विभूतिप्रसवमिति ॥ ईश्वरस्य विभूतिविस्तारः स्वकीयैश्वर्यख्यापनार्थं जगदुत्पत्तिरिति सृष्टिचिन्तकास्तत्त्वदृष्टिविधुरा मन्यन्त इत्यर्थः॥ तस्मिन् पक्षे सृष्टेर्वस्तुत्वशङ्कायां पक्षान्तरमाह ॥ स्वप्नेति ॥ स्वप्नरूपा मायारूपा चेत्येतदपि सृष्टिचिन्तकानामेव मतं, न तु परमार्थचिन्तकानां सृष्टावादरः । इन्द्रो मायाभिः पुरुरूप ईयत इत्यादिश्रुतेः । अतः सृष्टेस्तज्जनयितुरन्यस्मिँस्तुरीयाख्ये परमार्थतत्त्वे तत्त्वविदां मुमुक्षूणां चादरो महानित्यर्थः । जाग्रद्गतानामर्थानामेव स्वप्ने प्रथनात्तस्य सत्यत्वं मायायाश्च मण्यादिलक्षणायाः सत्यत्वाङ्गीकारात् । सिद्धान्ते कुत्रचित् स्वप्नमायावत्प्रतियापनं तु मिथ्यात्वार्थम् । वस्तुतः सृष्टेरनिर्वाच्यतैवेत्युज्ञेयम् ॥ ७ ॥

सृष्टिचिन्तकानामेव सृष्टिविषये विकल्पान्तरमुत्थापयति—

इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ॥
कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥८॥

इच्छामात्रमिति ॥ प्रभोः सत्यसङ्कल्पत्वात् सृष्टिर्घटादिः सङ्कल्पनामात्रं, न सङ्कल्पनातिरिक्तमित्यर्थः । ज्योतिर्विदां कल्पनाप्रकारमाह ॥ कालादिति ॥ ८ ॥

यथा तथा वाऽस्तु सृष्टिः । तस्यास्तु किं प्रयोजनमिति फलगतं विकल्पद्वयमाह—

भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ॥
देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥ ९ ॥

भोगार्थमिति ॥ सिद्धान्तमाह ॥ देवस्येति ॥ पूर्वपक्षाणामर्थवादं सूचयति ॥ आप्तेति ॥ देवस्य परमेश्वरस्यैष: सृष्टिप्रभव: स्वभाव: स्वभावशब्दिता माया । न ह्याप्तकामस्य मायां विना सृष्टि: । न हि रज्ज्वादीनामविद्यास्वभावव्यतिरेकेण सर्पाद्याभासत्वे कारणं शक्यं वक्तुम् । तस्मादज्ञानाद् ब्रह्मण: सृष्टिसम्भव: । आत्मन आकाश: सम्भूत इति श्रुतेरित्यर्थ: ॥ ९ ॥

तदेवमध्यस्तप्रधानं पादत्रयं व्याख्यायाधिष्ठानप्रधानं चतुर्थपादं क्रमप्राप्तं व्याख्यातुं नान्त:प्रज्ञमित्यादि चतुर्थं मन्यन्ते इत्यन्तेन श्रुत्युक्तेऽर्थे निवृत्तेरित्यादि विकल्प इत्यन्तान् श्लोकानवतारयति—

अत्रैते श्लोका भवन्ति—

**निवृत्ते: सर्वदु:खानामीशान: प्रभुरव्यय: ॥**
**अद्वैत: सर्वभावानां देवस्तुर्यो विभु: स्मृत: ॥ १० ॥**

अत्रेति ॥ तत्राद्यं श्लोकं व्याकरोति ॥ निवृत्तेरिति ॥ प्राज्ञतैजसविश्वलक्षणानामाध्यात्मिकादिभेदभिन्नानां तद्धेतूनां तदाधाराणां सर्वदु:खानां निवृत्तिं प्रति प्रमाणारूढत्वेन य: प्रभु: समर्थ: । यश्च सर्वभावानां पूर्वोक्तानामद्वैत: प्रत्यक्सर्पादिभावानां प्रत्यग्रज्जुवत् । यश्चाव्यय: स्वरूपतो न व्येति न व्यभिचरति देव: स्वप्रकाश: स तुर्यो विश्वाद्यपेक्षया चतुर्थो विभुर्व्यापीति विद्वद्भिर्निश्चित इत्यर्थ: । ईशान इत्यस्य व्याख्यानं प्रभुरिति ॥ १० ॥

विश्वादीनां सामान्यविशेषनिरूपणद्वारेण तुरीयमेव निर्द्धारयति—

**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ॥**
**प्राज्ञ: कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यत: ॥ ११ ॥**

कार्येति ॥ कार्यं क्रियत इति फलभाव: । कारणं करोतीति बीजभाव: । तत्त्वाग्रहणान्यथाग्रहणाभ्यां बीजफलभावाभ्यां तौ यथोक्तौ विश्वतैजसौ बद्धौ संगृहीताविष्येते। प्राज्ञस्तु बीजभावेनैव बद्ध: । विश्वतैजसयोरुभयबद्धत्वं सामान्यम् । प्राज्ञस्य कारणमात्रबद्धत्वं विशेष इत्यर्थ: । त्रयाणामवान्तरविशेषे स्थिते प्रकृते तुरीये किमायातमित्याशङ्क्याह ॥ द्वौ त्विति ॥ बीजफलभावौ तत्त्वाग्रहणान्यथाग्रहणे तुर्ये न सिद्ध्यतो, न विद्येते, न सम्भवत इत्यर्थ: ॥ ११ ॥

प्राज्ञस्य कारणबद्धत्वं साधयति–

**नाऽऽत्मानं न परांश्चैव न सत्यं नापि चानृतम् ॥**
**प्राज्ञः किञ्चन संवेत्ति तुर्यं तत् सर्वदृक् सदा ॥ १२ ॥**

नात्मानमिति ॥ यस्मात् प्राज्ञो नात्मानमहमेवंविध इति वेत्ति, यस्माच्च स्वस्मादन्यमयमेवंविध इति, अयं सत्यमयं मिथ्येत्येवं च न वेत्ति, तस्मात् कारणबद्धोऽसावित्यर्थः । तुरीयस्य कार्यकारणाभ्यामसंस्पृष्टत्वं स्पष्टयति ॥ तुर्यमिति ॥ यस्मात्तुरीयं तत्सर्वदा सदैव सर्वं च तद् दृगिति सर्वदृक् । तस्मान्न तत्र तत्त्वाग्रहणलक्षणं बीजमत एव तत्प्रसूतस्यान्यथाग्रहणस्याप्यभावः । न हि सवितरि सदा प्रकाशात्मके तद्विरुद्धमप्रकाशनमन्यथाप्रकाशनं वा सम्भवति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति श्रुतेर्नान्यदतोऽस्ति द्रष्टा इत्यादिश्रुतेश्च सर्वस्य द्रष्टेति वा सर्वदृगित्यर्थः ॥ १२ ॥

विमतं कारणबद्धं, द्वैताग्रहणत्वात्, प्राज्ञवदित्यनुमानप्रयुक्तां तुरीयेऽपि कारणबद्धत्वाशङ्कां परिहरति–

**द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ॥**
**बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥ १३ ॥**

द्वैतस्येति ॥ यद्यप्युभयोः प्राज्ञतुरीययोर्द्वैतस्याग्रहणं तुल्यं– सममेव, तथापि प्राज्ञो बीजनिद्रायुतः । तत्त्वाऽप्रतिबोधो निद्रा सैव च विशेषप्रतिबोधप्रसवस्य बीजम् । सा बीजनिद्रा । तया युतोऽसौ । तुर्ये सा बीजनिद्रा न विद्यते, नास्त्येव । सदा दृक्स्वभावत्वात् । तथाचात्मनो विशुद्धचिद्धातुत्वसाधकतत्त्वमादिमानविरोधान्नानुमानस्य मानतेत्यर्थः ॥ १३ ॥

कार्यकारणबद्धौ तावित्यादिश्लोकोक्तमर्थमनुभवावष्टम्भेन प्रपञ्चयति–

**स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ॥**
**न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥ १४ ॥**

स्वप्नेति ॥ स्वप्नोऽन्यथाग्रहणमहम्ममादिलक्षणो, निद्रोक्ता तत्त्वाऽप्रतिबोधलक्षणं न जान इत्येवंरूपं तम इति, ताभ्यां युक्तौ विश्वतैजसौ । अतस्तौ कार्यकारणबद्धावित्युक्तावित्यर्थः । द्वितीयं पादं विभजते ॥ प्राज्ञस्त्विति ॥ प्राज्ञो हि स्वप्नवर्जितः केवलयैव निद्रया युत इति

कारणबद्ध इत्युक्तमित्यर्थः । तुरीयमनुभवेन साधयति ॥ नेति ॥ नोभयं पश्यन्ति तुरीये निश्चिता ब्रह्मविदो विरुद्धत्वात् सावितरीव तमः । अतो न कार्यकारणबद्ध इत्युक्तस्तुरीय इत्यर्थः ॥ १४ ॥

कदा तर्हि स्वप्नो भवतीत्यपेक्षायामाह-

अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः ॥
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ १५ ॥

अन्यथेति ॥ निद्रा तर्हि कदेति सन्दिहानं प्रत्याह ॥निद्रेति॥ तुरीयप्रतिपत्तिसमयं साङ्गिरते ॥ विपर्यास इति स्वप्नजागरितयोस्तत्त्वमन्यथा गृह्णतः स्वप्नो भवति रज्ज्वामिव सर्पः, तत्त्वमऽजानतो निद्रा तयोर्विपर्यासे स्वप्ननिद्रे तत्त्वबोधतो क्षीणे नष्टे तुरीयं परमानन्दं चतुर्थमश्नुते । तदेव पूर्णोऽहमिति निश्चितो भवति । प्रतिबन्धकारणाभावादित्यर्थः । विश्वादिषु त्रिषु, तयोरिति द्विवचनं तु विश्वैतजसयोर्निद्रायागुणभूतत्वेनान्यथाग्रहणस्य प्राधान्यत्वादेकराशित्वं, प्राज्ञस्य पुनर्निद्राप्रधानत्वाद् राश्यन्तरत्वमिति द्रष्टव्यमिति भावः ॥ १५ ॥

कदा तत्त्वप्रतिबोधो विपर्यासक्षयहेतुर्भवतीत्यपेक्षायामाह-

अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते ॥
अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा ॥ १६ ॥

अनादीति ॥ योऽयं संसारी जीव उभयलक्षणेन तत्त्वाप्रतिबोधरूपेण बीजात्मनाऽन्यथाग्रहणलक्षणेन चानादिकालप्रवृत्तेन मायालक्षणेन स्वप्नेन, ममाऽयं पिता पुत्रोऽयं नप्ता क्षेत्रं पशवोऽहमेषां स्वामी सुखी दुःखी क्षपितोऽहमनेन वर्द्धितश्चानेनेत्येवम्प्रकारान् स्वप्नान् स्थानद्वयेऽपि पश्यन् सुप्तः । स यदा वेदान्तार्थतत्त्वाभिज्ञेन परमकारुणिकेन गुरुणा नाऽस्येवं त्वं हेतुफलात्मकः, किन्तु तत्त्वमसीति प्रतिबोध्यमानो यदा तदैवं प्रतिबुद्ध्यत इत्याह॥अजमिति॥नास्मिन् बाह्यमाभ्यन्तरं वा जन्मादिभावविकारोऽस्ति,अतोऽजं, यस्माज्जन्मादिकारणभूतं नास्मिन्नविद्यातमोबीजं निद्रा विद्यत इति अनिद्रम् । तत्तुरीयम् । अत एवास्वप्नम् अन्यथाग्रहणशून्यम् । तन्निमित्ताभावात् । यस्माच्चानिद्रमस्वप्नं तस्मादजमद्वैतं तुरीयमात्मानं बुद्ध्यते इत्यर्थः ॥ १६ ॥

प्रपञ्चनिवृत्त्या चेदद्वैतं, कथं तर्ह्यनिवृत्ते प्रपञ्चे तत् स्यादित्याशङ्क्याह

**प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ॥**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ १७ ॥**

प्रपञ्च इति ॥ यदि प्रपञ्चः परमार्थसत्यः स्यात् तर्हि तस्मिन् सति नाद्वैतं सिध्येत् । तत्तु नास्ति । यतो रज्ज्वां सर्पवत् कल्पितत्वाद् विद्यमानश्चेन्निवर्तेत न संशयः । अतो ज्ञायते, मायामात्रमित्याह ॥ मायेति ॥ न हि रज्ज्वां भ्रान्तिबुद्ध्या कल्पितः सर्पो विद्यमानः सन् विवेकतो निवृत्तः । बाधितस्य कालत्रयेऽपि सत्त्वाभावात् । नैव वा माया मायाविना प्रयुक्ता तद्दर्शिनां चक्षुर्बन्धापगमे विद्यमाना सती निवृत्ता । तथेदं प्रपञ्चाख्यं मायामात्रं द्वैतं रज्जुवन्मायाविवच्चाद्वैतं परमार्थत इत्याह ॥ अद्वैतमिति ॥ १७ ॥

ननु प्रपञ्चस्य कल्पितत्वात् तस्मिन् सत्यप्यद्वैतं सिध्यति । शास्ता शास्त्रं शिष्य इति विकल्पस्य तु परमार्थत्वात् तस्मिन् सति नाद्वैतमित्याशङ्क्याह—

**विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ॥**
**उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ १८ ॥**

विकल्प इति ॥ यदि केनचिद्धेतुना तत्त्वाज्ञानेन कार्येण शास्त्रादिविकल्पो हेतुतया विकल्पितस्तथाप्यसावपि बाधितो निवर्तेत, न तु तात्त्विकमद्वैतं विरोद्धुमर्हति । तत्त्वज्ञानात् प्रागवस्थायामेव तत्त्वोपदेशं निमित्तीकृत्य यतः शास्त्रादिभेदोऽनूद्यते । उपदेशप्रयुक्ते तु ज्ञाने निर्वृत्ते न किञ्चिदपि द्वैतमस्तीत्यद्वैतमविरुद्धमित्यर्थः ॥ १८ ॥

तत्त्वज्ञानसमर्थानां मध्यमानामुत्तमानां चाधिकारिणामध्यारोपापवादाभ्यां पारमार्थिकं तत्त्वमुपदिष्टम् । इदानीं तत्त्वग्रहणाऽसमर्थानामधमाधिकारिणामात्मध्यानविधानायारोपदृष्टिमेवावष्टभ्य पादानां मात्राणां च यदेकत्वं सनिमित्तं सोऽयमित्यादि सर्वमपीतिश्च भवति य एवं वेदेत्यन्तेन श्रुत्योपन्यस्तं तस्मिन्नुक्तेऽर्थे, विश्वस्येत्यादि अकारो नयत इत्यन्तान् श्लोकानवतारयति—

**अत्रैते श्लोका भवन्ति—**

**विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् ॥**
**मात्रासंप्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥ १९ ॥**

अत्रेति ॥ प्रथमपादस्य प्रथममात्रायाश्चाभेदारोपार्थमुक्तं सामान्यद्वयं विशदयति॥ विश्वस्येति॥ अत्वविवक्षायामित्यस्य व्याख्यानं, मात्रासम्प्रतिपत्तौ इति॥ विश्वस्य अकारमात्रत्वध्याने आदिसामान्यमुत्कटमुद्भूतं स्पष्टं दृश्यते। विश्वो हि तैजसप्राज्ञाऽपेक्षया आदिर्भवति। अकारश्च उकारमकारापेक्षया। तथाप्तिसामान्यमुत्कटमिति चशब्दादनुवर्तते। अकारो वै सर्वा वागिति श्रुतेरकारेण सर्वा वाग् व्याप्ता। तथा वैश्वानरेण जगत्। तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजा इति श्रुतेः। अतः सामान्यद्वयाद्विश्वस्याकारत्वेन ध्येयत्वमित्यर्थः॥ १९॥

द्वितीयपादस्य द्वितीयमात्रायाश्चैकत्वाऽऽरोपप्रयोजकद्वयं श्रुत्युक्तं व्यनक्ति-

**तैजसस्योत्वविज्ञाने उत्कर्षो दृश्यते स्फुटम्॥**
**मात्रासंप्रतिपत्तौ स्यादुभयत्वं तथाविधम्॥ २०॥**

तैजसस्येति॥ उत्वविज्ञाने इत्यस्य व्याख्यानं, मात्रासम्प्रतिपत्ताविति॥ स्फुटमिति क्रियाविशेषणम्। तैजसस्योकारत्वविवक्षायामुत्कर्षः अकारादुकारस्य विश्वात् स्थूलाभिमानिनः सूक्ष्माभिमानवतस्तैजसस्य स्फुटं यथा स्यात्तथा दृश्यते। युक्तं हि स्थूलाभिमानिनः सकाशात् सूक्ष्माभिमानिन उत्कर्षत्वम्। यद्यप्यकारस्योत्कर्षो वास्तवोऽपि, तथापि पादक्रमादुकारस्योत्कर्षवत्त्वमौपचारिकम्। तथोभयत्वमकारमकारयोर्मध्यस्थत्वमुकारस्य। विश्वप्राज्ञयोर्मध्यस्थत्वं तैजसस्य, तथाविधं मध्यस्थत्वेन सामान्यं स्फुटमेवेत्यतः सामान्यद्वयात् तैजसस्योकारत्वेन ध्येयत्वमित्यर्थः॥ २०॥

तृतीयपादस्य तृतीयमात्रायाश्चैकत्वाध्यासे सामान्यद्वयं श्रुत्या दर्शितं विशदयति-

**मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम्॥**
**मात्रासंप्रतिपत्तौ तु लयसामान्यमेव च॥ २१॥**

मकारेति॥ मितिर्मानम्। मीयेते हि विश्वतैजसौ प्राज्ञेन प्रलयोत्पत्त्योः प्रवेशनिर्गमाभ्यां, प्रस्थेनेव यवाः। तथा ओमित्योङ्कारस्य नैरन्तर्येणोच्चारणे सत्यऽकारोकारौ प्रथमं मकारे प्रविश्य पुनस्तस्मान्निर्गच्छन्ताविवोपलभ्येते। तेन मकारेऽपि मानसामान्यम्। तथा वा लयोऽप्य-

पर एकीभावः सामान्यम् । ओँङ्कारोच्चारणे अन्त्येऽक्षरे एकीभूताविव अकारोकारौ । तथा विश्वतैजसौ सुषुप्तिकाले प्राज्ञे। अतः सामान्यद्वया-देकत्वं प्राज्ञमकारयोरिति चिन्त्यमित्यर्थः । शेषं पूर्ववत् सर्वम् ॥ २१ ॥

विश्वादीनामकारादीनां च यत्तुल्यं सामान्यमुक्तं तद्विज्ञानं स्तौति–

**त्रिषु धामसु यत्तुल्यं सामान्यं वेत्ति निश्चितः ॥**
**स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ॥ २२ ॥**

त्रिष्विति ॥ यथोक्ते जाग्रदादिस्थानत्रये पादानां मात्राणां च सामा-न्यमाऽऽप्त्युत्कर्षोभयत्वमव्ययरूपं यो वेत्ति जानाति स महामुनिर्ब्रह्म-वित् सर्वेषां भूतानां पूज्यः पूजार्हो, वन्द्यश्च नमस्करणीयो भवति । अतस्तज्ज्ञातव्यमित्यर्थः ॥ २२ ॥

पूर्वोक्तसामान्यज्ञानवतो ध्याननिष्ठस्य फलविभागं दर्शयति–

**अकारो नयते विश्वमुकारश्चापि तैजसम् ॥**
**मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः ॥ २३ ॥**

अकार इति ॥ यथोक्तैः सामान्यैरात्मपादानां मात्राभिः सहैकत्वं कृत्वा यथोक्तोङ्कारं प्रतिपद्य यो ध्यायीत तम् अकारस्तत्प्रधान ओँङ्कारो विश्वं वैश्वानरं नयते प्रापयति । विश्वप्राप्तेर्ध्यानमन्तरेणासिद्धत्वादि-त्यर्थः । तथोकारप्रधानं तमेव ध्यायतस्तैजसस्य हिरण्यगर्भप्राप्तिर्भवती-त्याह ॥ उकारश्चापीति ॥ मकारप्रधान ओँङ्कारः प्राज्ञमव्याकृतं नयते इति चशब्दादनुवर्तते इत्याह ॥ मकारश्चेति ॥ यत्र तु पादानां मात्राणां च विभागो नास्ति तस्मिँश्चोङ्कारे तुरीयात्मनि व्यवस्थितस्य प्राप्तृ-प्राप्तव्यप्राप्तिविभागो नास्तीत्याह ॥ नामात्रे इति ॥ स्थूलप्रपञ्चो जागरितं विश्वश्चेत्येतत्त्रितयमकारमात्रमिति ध्यानं वैश्वानरप्राप्तिसाधनं, सूक्ष्म-प्रपञ्चः स्वप्नस्तैजसश्चैतत्त्रितयमुकारमात्रमित्यध्यवसायो हिरण्यगर्भ-प्राप्तिहेतुर्भवति । प्रपञ्चद्वयकारणं सुषुप्तं प्राज्ञश्चैतत्त्रितयं मकारमात्र-मिति निश्चयोऽव्याकृतप्राप्तिकारणम् । तत्रापि पूर्वं पूर्वमुत्तरोत्तरभाव-मापाद्य तदेवं सर्वमोङ्कारमात्रमिति ध्यात्वा स्थितस्य यदेतत्सर्वमोमिति रूपेण प्रतिपन्नं तत्परिशुद्धं ब्रह्मैवेत्याचार्योपदेशसमुत्थसम्यग्ज्ञानेन पूर्वो-क्तसर्वविभागनिमित्ताज्ञानस्य मकारत्वेन गृहीतस्य क्षये ब्रह्मण्येव शुद्धे पर्यवसितस्य न कश्चिद् वृत्तिरुपपद्यते. परिच्छेदाभावादिति भावः ॥२३॥

अमात्रश्चतुर्थ इत्यादि, य एवं वेदेति समाप्त्यन्तेन श्रुत्योक्तेऽर्थे, ओँङ्कारमित्यादि, अमात्र इति पादसमाप्त्यन्तान् श्लोकानवतारयति—

अत्रैते श्लोका भवन्ति—

ओँङ्कारं पादशो विद्यात् पादा मात्रा न संशयः ॥
ओँङ्कारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत् ॥२४॥

अत्रेति ॥ पादानां मात्राणां चान्योन्यमेकत्वं कृत्वा तद्विभागविधुरमोङ्कारं ब्रह्मबुद्ध्या संशयरहितः सन् जानीयादित्याह— ओङ्कारमिति ॥ एवमोङ्कारे ज्ञाते दृष्टार्थमदृष्टार्थं वा न किञ्चित् प्रयोजनं चिन्तयेत्, कृतार्थत्वादित्याह ॥ ओङ्कारमिति ॥ २४ ॥

प्रणवानुसन्धानकुशलस्य प्रणवज्ञानेनैव सर्वद्वैतापवादकेन कृतार्थता भवतीत्युक्तम् । इदानीं तदनभिज्ञस्य परोपदेशमात्रशरणस्य ध्यानकर्तव्यतां दर्शयति—

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ॥
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ २५ ॥

युञ्जीतेति ॥ ननु मनसः समाधानं ब्रह्मणि कर्तव्यं, किमिति प्रणवे तत्कर्तव्यतोच्यते ? तत्राह ॥ प्रणव इति ॥ सम्प्रति प्रणवे समाहितस्य फलं दर्शयति ॥ प्रणवे नित्येति ॥ युञ्जीत समादध्यात् । यथाव्याख्याते परमार्थरूपे प्रणवे चेतो मनः ॥ यस्मात् प्रणवो ब्रह्म निर्भयम् । न हि तत्र सदा युक्तस्य भयं विद्यते क्वचित् । विद्वान्न बिभेति कुतश्चनेति श्रुतेरित्यर्थः ॥ २५ ॥

कीदृशस्तर्हि प्रणवो मन्दानां मध्यमानां चाधिकारिणां ध्येयो भवतीत्याशङ्क्य परापरब्रह्मात्मनेत्याह—

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ॥
अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥ २६ ॥

प्रणवो हीति ॥ उत्तमाधिकारिणां कीदृशस्तर्हि प्रणवः सम्यग्ज्ञानगोचरो भवति इति वीक्षायां सर्वविशेषशून्यमेकरसं प्रत्यग्भूतं यद् ब्रह्म तद्रूपेणेत्याह ॥ अपूर्व इति ॥ न पूर्वं कारणमस्य विद्यत इत्यपूर्वः । नास्यान्तरं भिन्नजातीयं किञ्चिद्विद्यत इत्यनन्तरः । तथा बाह्यमन्यन्न विद्यत इत्यबाह्यः । अपरं कार्यमस्य न विद्यत इत्यनपरः । स बाह्याभ्य-

न्तरो ह्यजः सैन्धवघनवदित्यर्थः ॥ सगुणनिर्गुणस्वरूपः प्रणवो ब्रह्मैवेति ज्ञातो भवत्युत्तमानामित्यर्थः ॥ २६ ॥

यदोङ्कारस्य प्रत्यगात्मत्वमापन्नस्य तुरीयस्यापूर्वत्वमनन्तरत्वमित्यादिविशेषणमुक्तं, तत्र हेतुमाह—

सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ॥
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥ २७ ॥

सर्वस्येति ॥ यथा मायाव्यादयः स्वगतविकारविरहिणः स्वमायास्वाज्ञानादेव मायाहस्तिरज्जुसर्पमृगतृष्णिकादिहेतवस्तथैव च सर्वस्य स्वप्नादिवदुत्पद्यमानस्य वियदादिप्रपञ्चस्यादिमध्यान्ता उत्पत्तिस्थितिप्रलयाः, यथोक्तात्मगतविकारमन्तरेणैव स्वाज्ञानवशादेवात्माधीना भवन्ति । अतस्तस्योक्तं विशेषणं युक्तमित्यर्थः । एतेन परिणामवादं प्रत्युक्तं वेदितव्यम् । यथोक्तविशेषणं प्रत्यञ्चं प्रतिपद्य कृतकृत्यो भवतीत्याह ॥ एवं हीति ॥ पूर्वोक्तविशेषणसम्पन्नं हि प्रणवमात्मानं मायाव्यादिस्थानीयं ज्ञात्वा तत्क्षणादेव सहायान्तरमन्तरेणोक्तविशेषणमात्मानं व्यश्नुत इत्यर्थः ॥ २७ ॥

ब्रह्मबुद्ध्या प्रणवमभिध्यायतो हृदयाख्यं देशमुपदिशति—

प्रणवं हीश्वरं विद्यात् सर्वस्य हृदि संस्थितम् ॥
सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ॥ २८ ॥

प्रणवमिति ॥ सर्वप्राणिजातस्य स्मृतिप्रत्ययास्पदे हृदये स्थितमीश्वरं प्रणवं विद्यादित्यर्थः । परमार्थदर्शिनस्तु देशाद्यनवच्छिन्नवस्तुदर्शनादार्थिकं शोकाभावं, तत्र को मोहः कः शोक इत्यादिश्रुतिसिद्धमनुवदति ॥ सर्वव्यापिनमिति ॥ सर्वव्यापिनं व्योमवदोङ्कारमात्मानमसंसारिणं धीरो विवेकबुद्धिमान् मत्वा साक्षात्कारं सोऽहमित्यनुभूय न शोचति शोकनिमित्ताऽज्ञानाभावात् । तरति शोकमात्मवित्, भिद्यते हृदयग्रन्थिरित्यादिश्रुतिभ्य इत्यर्थः ॥ २८ ॥

ॐकारं तुरीयभावमापन्नं यः प्रतिपन्नस्तं स्तौति—

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ॥
ॐङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥ २९ ॥

अमात्र इति ॥ पादविभागो मात्राविभागो वा यत्र तुरीये आत्मनि न विद्यते सोऽयममात्रः । मीयत इति मात्रा परिच्छित्तिः । सा अनन्ता यस्यौपाधिकी सोऽनन्तमात्रः । सर्वद्वैतोपशमत्वादेव शिवः । ॐकारो यथाव्याख्यातो विदितो येन स परमार्थतत्त्वस्य मननान्मुनिरित्यर्थः । यथोक्तप्रणवप्रतिपत्तिविहीनस्तु जननमरणमात्रभागी, न पुरुषार्थभाग्भवतीति विद्यारहितं निन्दति ॥ नेतर इति ॥ शास्त्रविदपि तत्त्वज्ञानाभावात् संसरत्येवेत्यर्थः । तदेवं प्रणवद्वारेण निरुपाधिमात्मानमनुसंदधानस्य पुरुषार्थपरिसमाप्तिर्नेतरेषां बहिर्मुखानामिति स्थितम् ॥ २९ ॥

**इति माण्डूक्योपनिषदर्थाविष्करणपरासु गौडपादीयकारिकासु प्रथमभागमप्रकरणम् ॥ १ ॥**

इति श्रीगौडपादीयश्लोकवृत्तौ प्रथमं प्रकरणम् ॥ १ ॥

## अथ द्वितीयं प्रकरणम् ॥ २ ॥

ज्ञाते द्वैतं न विद्यत इत्युक्तम् । एकमेवाद्वितीयं, यत्र हि द्वैतमिव भवतीत्यादिश्रुतिभ्यश्चागमप्राधान्येनाद्वैतं प्रतिपादयता तत्प्रत्यनीकस्य द्वैतस्य मिथ्यात्वमर्थादुक्तम् । इदानीं तन्मिथ्यात्वमुपपत्तिप्राधान्येनापि शक्यते विधारयितुमिति दर्शयितुं प्रकरणान्तरमवधारयन्नादौ दृष्टान्तसिद्ध्यर्थं तस्मिन् वृद्धसंमतिमाह—

**हरिः ॐम् ।**

**वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः ॥**
**अन्तःस्थानात्तु भावानां संवृतत्वेन हेतुना ॥ १ ॥**

वैतथ्यमिति ॥ प्रमाणानुग्राहकत्वात्तर्कस्यानुग्राह्यप्रमाणस्य प्रधानत्वात्तदधीनविचारानन्तरं तर्काधीनविचारस्य सावकाशत्वादित्यवसरसङ्गत्या युक्तं पौर्वापर्यं पूर्वोत्तरप्रकरणयोरिति ध्येयम् । वितथस्य भावो वैतथ्यमसत्यत्वं, सर्वेषां बाह्याध्यात्मिकानां घटदुःखादीनां भावानां पदार्थानां स्वप्न उपलभ्यमानानामाहुः कथयन्ति मनीषिणः प्रमाणकुशला इत्यर्थः । न केवलमाप्तोक्तिवशादेव स्वप्नमिथ्यात्वं, किन्तु युक्तितोऽपीत्याह ॥ अन्तःस्थानादिति॥ अन्तः शरीरस्य मध्ये स्थानं येषाम् । तत्र हि

भावा उपलभ्यन्ते पर्वतहस्त्यादयो, न बहिः शरीरात् । तस्मात्ते वितथा भवितुमर्हन्तीत्यर्थः । तेषामन्तरुपलभ्यमानत्वेऽपि न वैतथ्यम् । अपवरकाद्यन्तरुपलभ्यमानघटादिषु व्यभिचारादिति शङ्कां परिहरति ॥ संवृतत्वेनेति ॥ अन्तः संवृतस्थानादित्यर्थः । न हि देहे पर्वतोऽस्ति । तदा संवृते देहान्तर्नाडीषु पर्वतहस्त्यादीनां सम्भवो नास्तीति किमु वक्तव्यम् । तस्मात् स्वाप्ना भावाः सत्या न भवन्ति । अन्तःस्थत्वे सत्युचितदेशशून्यत्वाद्, रजतभुजङ्गादिवदित्यनुमानस्य नास्ति व्यभिचारितेति भावः ॥ १ ॥

स्वप्नदृश्यानां भावानामन्तःसंवृतस्थानमित्येतदसंप्रतिपन्नम् । यस्मात् प्राच्येषु सुप्त उदक्षु स्वप्नान् पश्यन्निव दृश्यते इत्येतदाशङ्क्याह—

**अदीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति ॥**
**प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ॥ २ ॥**

अदीर्घत्वाच्चेति ॥ न देहाद् बहिर्देशान्तरं गत्वा स्वप्नान् पश्यति । यस्मात् सुप्तमात्र एव देहदेशाद् योजनशतान्तरिते मासमात्रप्राप्ये देशे स्वप्नान् पश्यन्निव दृश्यते । न च तद्देशप्राप्तेरागमनस्य च दीर्घः कालोऽस्ति । अतः स्वप्नः सत्यो न भवति । उचितकालविकलत्वात्, सम्प्रतिपन्नवत् । तस्मान्न स्वप्नदृग् देशान्तरं गच्छतीत्यर्थः । बहिः स्वप्नोपलब्धिपक्षे दोषान्तरमाह ॥ प्रतिबुद्धश्चेति ॥ सर्वोऽपि स्वप्नद्रष्टा देशान्तरे स्वप्नान् पश्यन्नकस्मादेव प्रतिबुद्धो न तत्रास्ति, किन्तु शयनदेशे वर्तते । यदि च स्वप्ने देशान्तरं गच्छेद्, यस्मिन् देशे स्वप्नान् पश्येत् तत्रैव प्रतिबुध्येत । न चैतदस्ति । रात्रौ च सुप्तोऽहनीव भावान् पश्यति बहुभिः संगतो, यैश्च सङ्गतो भवति तैर्गृह्येत । न च गृह्यते । गृहीतश्चेत्त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः । न चैतदस्ति । तस्मान्न देशान्तरं गच्छति । स्वप्ने उचितस्य कालस्य करणस्य सहकारिणश्चाभावेऽपि स्वप्नदर्शनाच्च तन्मिथ्यात्वं सिद्धमित्यर्थः ॥ २ ॥

स्वप्नदृश्यानां भावानां मिथ्यात्वे हेत्वन्तरमाह—

**अभावश्च रथादीनां श्रूयते न्यायपूर्वकम् ॥**
**वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम् ॥ ३ ॥**

अभावश्चेति ॥ न तत्र रथा न रथयोगा न पन्थानो भवन्तीत्यादिश्रुत्या स्वप्ने स्वयञ्ज्योतिष्ट्वमात्मनो दर्शयन्त्या तत्र दृश्यानां रथादीनामभावो योग्यदेशाद्यभावद्योतकन्यायपुरःसरं श्रूयते । अतस्तेन न्यायेन प्राप्त-

मेव स्वप्नदृश्यभावानां मिथ्यात्वमन्यपरया श्रुत्या प्रकाशितमिति ब्रह्मविदो वदन्ति। तथाच स्वप्ने भावानां मिथ्यात्वं श्रुतियुक्तिभ्यां सिद्धमित्यर्थः॥ ३॥

उक्तन्यायेन दृष्टान्ते सिद्धे फलितमनुमानमारचयति–

अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम्॥
यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते॥ ४॥

अन्तःस्थानादिति॥ जाग्रद्दृश्यानां भावानां वैतथ्यं भवितुमर्हति। दृश्यत्वात्। स्वप्नदृश्यभाववत्। यथा तत्र स्वप्ने दृश्यानां भावानां वैतथ्यं, तथा जागरितेऽपि दृश्यत्वमविशिष्टम्। तस्माज्जागरितेऽपि वैतथ्यं स्मृतम्। अन्तःस्थानात् संवृतत्वेन च स्वप्नदृश्यानां भावानां जाग्रद्दृश्येभ्यो भेदः। दृश्यत्वं चाविशिष्टमुभयत्रेति प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनसपक्षपक्षाणां क्रमेण द्योतनं जाग्रद्भावमिथ्यात्वसाधकमित्यर्थः॥४॥

स्वप्नवज्जागरितस्य मिथ्यात्वे स्वप्ननिद्रायुतावित्यादौ जागरिते स्वप्नशब्दप्रयोगो युक्तो भवतीत्याह–

स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिणः॥
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना॥ ५॥

स्वप्नेति॥ उभयत्रैकत्वं विद्वदभिमतमित्यत्र हेतुमाह॥ भेदानामिति॥ भेदाभिधमानाभावात् तेषामवस्थाद्वयवर्तिनां ग्राह्यत्वं ग्राहकत्वमविशिष्टम्। तेन दृश्यत्वेन हेतुना प्रसिद्धमेव तेषां मिथ्यात्वेन समत्वम्। तेन स्थानयोरेकरूपत्वं विवेकिनामभिप्रेतमिति यत् पूर्वमनुमानाख्यं प्रमाणसिद्धं तस्यैव फलं स्थानद्वयाविशेषरूपमनेन श्लोकेनोक्तमित्यर्थः॥५॥

जाग्रद्दृश्यानां भावानां मिथ्यात्वमित्यत्रानुमानान्तरमाह–

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा॥
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः॥ ६॥

आदाविति॥ तर्हि घटः सन् पटः सन्निति प्रत्यक्षविरुद्धमनुमानममानमितिचेद् नेत्याह॥ वितथैरिति॥ यदाऽऽदावन्ते च नास्ति वस्तु मृगतृष्णिकादि, तन्मध्येऽपि नास्तीति निश्चितं लोके। तथा इमे जाग्रद्दृश्या भेदा आद्यन्तयोरभावाद्वितथैरेव मृगतृष्णिकादिभिः सदृशत्वाद्वितथा एव। तथाप्यवितथा इव लक्षिता मूढैरनात्मविद्भिः। घटः

सन्नितिप्रतीतिस्तु सद्गन्धर्वनगरमितिवदाऽऽपातकीति भावः ॥ ६ ॥

ननु जाग्रद्दृश्या अन्नपानवाहनादयः क्षुत्पिपासादिनिवृत्तिं कुर्वन्तो गमनागमनादिकार्यं च सप्रयोजना दृष्टा, न तु स्वप्नदृश्यानां तदस्ति। तस्मात् स्वप्नदृश्यवज्जाग्रद्दृश्यानामसत्त्वं मनोरथमात्रमिति चेन्नेत्याह–

**सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ॥**
**तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥७॥**

सप्रयोजनतेति ॥ यस्मात् सप्रयोजनता दृष्टा याऽन्नपानादीनां सा स्वप्ने विप्रतिपद्यते। जागरिते हि भुक्त्वा पीत्वा च तृप्तो विनिवर्तिततृट् सुप्तमात्र एव क्षुत्पिपासाद्यार्तमहोरात्रोपोषितमभुक्तवन्तमात्मानं मन्यते। यथा स्वप्ने भुक्त्वा पीत्वा चाऽतृप्तोत्थितस्तथाऽतो जाग्रद्दृश्यानां स्वप्ने विप्रतिपत्तिर्दृष्टाऽतो मन्यामहे तेषामप्यसत्त्वं स्वप्नदृश्यवदनाशङ्कनीयमित्यर्थः। तस्मादाद्यन्तवत्त्वमुभयत्र समानमिति मिथ्यैव खलु ते जाग्रद्दृश्याः स्मृतास्तत्त्वनिष्ठैरित्याह ॥ तस्मादिति ॥ ७ ॥

ननु चतुर्दन्तं गजमारूढमष्टभुजमात्मानं मन्यते। अन्यदपि एवम्प्रकारमपूर्वं पश्यति स्वप्ने। तन्नान्येनाऽसता सममिति सदेव। अतो दृष्टान्तोऽसिद्धः। तस्मात् स्वप्नवज्जागरितस्यासत्त्वमित्ययुक्तमित्याशङ्क्याह–

**अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनाम् ॥**
**तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः ॥ ८ ॥**

अपूर्वमिति ॥ यथा स्वर्गनिवसनशीलानामिन्द्रादीनां सहस्राक्षत्वादिधर्मस्तथा यदिदमपूर्वं स्वप्नप्रदर्शनं मन्यसे तदपि स्थानिनः स्वप्नस्थानवतो द्रष्टुरेव धर्मः। तेन दृश्यत्वात्तस्य मिथ्यात्वसिद्धिरित्यर्थः। कथं तेनैव दृश्यत्वं तत्राह ॥ तानयमिति ॥ यथैवेह व्यवहारभूमौ सुशिक्षितो देशान्तरप्राप्तिमार्गः। तेन मार्गेण देशान्तरं गत्वा तत्रत्यान् पदार्थान् वीक्षते, तथाऽयं स्वप्नद्रष्टा स्वप्नगतान् पदार्थान् यथोक्तप्रकारान् प्रतिपद्यते। ततश्च स्वप्नस्य स्थानिधर्मत्वाद्रज्जुसर्पादिवन्मिथ्यात्वमित्यर्थः ॥ ८ ॥

एवमपूर्वत्वाऽऽशङ्कां निराकृत्य स्वप्नदृष्टान्तस्य जाग्रद्दृश्यानां मिथ्यात्वं तेषु सदसद्विभागप्रतिभानविरुद्धमित्याशङ्क्य दृष्टान्तेन समाधत्ते–

स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत् ॥
बहिश्चेतोगृहीतं सद् दृष्टं वैतथ्यमेतयोः ॥ ९ ॥

स्वप्नवृत्ताविति ॥ स्वप्नस्थानेऽप्यन्तश्चेतसा मनोरथसङ्कल्पितमसत् । सङ्कल्पानन्तरसमकालमेवादर्शनात् तत्रैव स्वप्ने बहिश्चेतसा गृहीतं चक्षुरादिद्वारेणोपलब्धं घटादि सदिति । एवमसत्यमिति निश्चितेऽपि सदसद्विभागो दृष्टः । उभयोरप्यन्तर्बहिश्चेतःकल्पितयोर्वैतथ्यमेव दृष्टमित्यर्थः ॥ ९ ॥

दार्ष्टान्तिकमाह—

जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत् ॥
बहिश्चेतोगृहीतं सद्युक्तं वैतथ्यमेतयोः ॥ १० ॥

जाग्रदिति ॥ अन्तर्बहिश्चेतःकल्पितत्वाविशेषादिति व्याख्यातप्रायम् ॥ १० ॥

स्वप्नजाग्रत्स्थानयोर्भेदानां यदि वैतथ्यं तर्हि क एतानन्तर्बहिश्चेतःकल्पितान् भेदान् बुध्यते । बोद्धुरभावात् प्रमातृप्रमाणादिव्यवहाराऽनुपपत्तिः स्यादिति शङ्कते—

उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि ॥
क एतान् बुध्यते भेदान् को वै तेषां विकल्पकः ॥ ११ ॥

उभयोरिति ॥ को वै तेषां विकल्पको निर्माता स्मृतिज्ञानयोरालम्बनम् । न चेत् कश्चिदस्ति, निरात्मवाद इति कर्तृकरणकार्यव्यवस्थानुपपत्तिश्चेति शङ्कान्तरमाह ॥ को वेति ॥ ११ ॥

सर्वस्य मिथ्यात्वेऽप्येकस्मिन्नेवाद्वितीये प्रतीचि मायाकल्पितभेदाऽनुरोधेन कर्तृकार्यादिव्यवस्था सिध्यतीत्यन्त्यामनुपपत्तिं परिहरति—

कल्पयत्यात्मनाऽऽत्मानमात्मा देवः स्वमायया ॥
स एव बुध्यते भेदानिति वेदान्तनिश्चयः ॥ १२ ॥

कल्पयतीति ॥ तस्य द्योतकान्तरापेक्षां वारयति ॥ देव इति ॥ विवर्तवादं द्योतयति ॥ स्वमायेति ॥स्वयं स्वमायया स्वमात्मानमात्मा देवः, आत्मन्येव वक्ष्यमाणभेदाकारं कल्पयति रज्ज्वादाविव सर्पादी-

नित्यर्थः । स्वयमेव च तान् बुध्यते भेदानित्येवं वेदान्तनिश्चयः । नान्योऽस्ति ज्ञानस्मृत्याश्रयः । नन्वनिरास्पदे एव ज्ञानस्मृती वैनाशिकानामिवात्तो नाद्याऽनुपपत्तिर्नापि निरात्मवाद इत्याह ॥ स एवेति ॥ कर्त्रादिभेदस्य प्रमात्रादिभेदस्य च मिथ्यात्वे आत्मनि च निर्भेदे, नेह नानास्तीत्यादि एकमेवाद्वितीयमित्यादि च श्रुतिं प्रमाणयति ॥ इतीति ॥ १२ ॥

स कल्पयन् केन प्रकारेण कल्पयतीत्युच्यते–

**विकरोत्यपरान् भावानन्तश्चित्ते व्यवस्थितान् ॥**
**नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः ॥ १३ ॥**

विकरोतीति ॥ अपरान् लौकिकान् भावान् पदार्थाञ्छब्दादीनन्यांश्च शास्त्रीयान् अन्तश्चित्ते वासनारूपेण व्यवस्थितान् अव्याकृताऽनियतांश्च पृथिव्यादीन्, चशब्दाद्ऽनियतांश्च कल्पनाकालान् विद्युदादीनन्ताश्चित्ते विकरोति नानाकरोति । तथा बहिश्चित्तो बहिर्मुखः सन् तत्रैव बहिर्व्यवहारयोग्यतायै कल्पयति प्रभुरीश्वरश्चात्मनि । एवं सृष्टेः क्रमः । यथा लोके कुलालस्तन्तुवायो वा घटं पटं वा कार्यं चिकीर्षुरादौ व्यवहारगां व्यक्तिं बुद्धावाविर्भाव्य पश्चात्तामेव बहिर्नामरूपाभ्यां संपादयति तद्वदित्यर्थः ॥ १३ ॥

भावानां कल्पितानां कल्पनाकालादन्यस्मिन् काले सत्त्वाभावाज्जाग्रद्भावानां च कल्पनाकालात् कालान्तरेऽपि प्रत्यभिज्ञया सत्त्वावगमादनुपपन्नं तेषां मिथ्यात्वमित्याशङ्क्याह–

**चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये बहिः ॥**
**कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः ॥ १४ ॥**

चित्तेति ॥ ये कल्पनाकालभाविनो भावा मनस्यन्तर्वर्तन्ते, ये च सोऽयमिति प्रत्यभिज्ञायमानत्वेन पूर्वापरकालभाविनो बहिरेव व्यवहारयोग्या दृश्यन्ते, ते सर्वे कल्पिताः सन्तो मिथ्यैव भवितुमर्हन्ति प्रत्यभिज्ञायमानत्वलक्षणो विशेषस्तु नाकल्पितत्वप्रयुक्तः । स्वप्नेऽपि कल्पितभावेषु प्रत्यभिज्ञादिव्यवहारदर्शनादित्यर्थः ॥ १४ ॥

स्वप्नजागरितयोरुभयोरपि मिथ्यात्वे स्फुटास्फुटावभासविभागानुपपत्तेर्नाविशेषेण मिथ्यात्वमित्याशङ्क्याह–

अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः ॥
कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे ॥ १५ ॥

अव्यक्ता इति ॥ ये मनस्यन्तर्भावनारूपत्वादस्फुटाः, ये च मनसो बहिरुपलभ्यमानाःस्फुटा भवन्ति ते सर्वे मनःस्पन्दनमात्रत्वेन कल्पिता मिथ्यैव । अन्तर्बहिरिन्द्रियभेदनिमित्तः स्फुटत्वास्फुटत्वविशेषो, न मिथ्यात्वममिथ्यात्वं वा तत्रोपयुज्यते । सर्वसंप्रतिपन्नमिथ्यात्वेऽपि स्वप्ने स्फुटत्वास्फुटत्वविशेषप्रतिभानादित्यर्थः ॥ १५ ॥

भवतु सर्वस्य कल्पितत्वं, सा पुनः सर्वकल्पना केन द्वारेणेत्याशङ्क्याह–

जीवं कल्पयते पूर्वं ततो भावान् पृथग्विधान् ॥
बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथा स्मृतिः ॥१६॥

जीवमिति ॥ आत्मा हि सर्वं स्वमायावशेन कल्पयन्नादौ– अहं करोमि, मम सुखदुःखे इत्येवँल्लक्षणं जीवमऽनेवँल्लक्षण एव शुद्धे आत्मनि रज्ज्वामिव सर्पं कल्पयति । तत् सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः। स्वयमेव जीवभावमापद्यते। तद्द्वारेण पुनर्नानाविधान् बाह्यान् शब्दादीनाध्यात्मिकान् सुखं दुःखं ज्ञानं रागश्चेत्येवँल्लक्षणाँश्च निर्मिमीत इत्यर्थः। ननु वैषम्यकारणाभावादेकरसमेव विश्वं स्यादिति-चेन्नेत्याह ॥ यथेति ॥ योऽसौ स्वयं कल्पितो जीवः सर्वकल्पनायामधिकृतः स यथाविद्यो यादृशी विद्या विज्ञानमस्येति यथाविद्यस्तथाविधैव स्मृतिस्तस्येति तथास्मृतिर्भवति सः । अतः सृष्टेर्वैषम्यत्वे धर्मादिकारणसद्भावान्नैकरस्यम् । यथाकर्म यथाश्रुतमिति श्रवणादित्यर्थः ॥ १६ ॥

तत्र जीवकल्पना सर्वकल्पनामूलमित्युक्तम् । सैव जीवकल्पना किन्निमित्तेति दृष्टान्तेन प्रतिपादयति–

अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता ॥
सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः ॥ १७ ॥

अनिश्चितेति ॥ यथा लोके स्वेन स्वरूपेणानिश्चिताऽनवधारिता एवमेवेति रज्जुः, मन्दान्धकारे सर्प उदकधारा दण्ड इति वाऽनेकधा विकल्पिता भवति पूर्वस्वरूपानिश्चयनिमित्तम् । यदि हि पूर्वमेव

रज्जुः स्वरूपेण निश्चिता स्यान्न सर्पादिविकल्पोऽभविष्यत्। यथा स्वहस्ताङ्गुल्यादिषु ज्ञातेषु न सर्पादिभ्रान्तिः कस्यचिज्जायते। तद्वद्धेतुफलादिसंसारधर्मानर्थविलक्षणतया स्वेन विशुद्धविज्ञप्तिमात्रसताऽद्वयरूपेणानिश्चितत्वाज्जीवप्राणाद्यनन्तभावभेदैरात्मा विकल्पितइत्येषः सर्वोपनिषदां सिद्धान्त इत्यर्थः॥ १७॥

अविद्याकृता जीवकल्पनेत्यन्वयमुखेनोक्तम्। तदेवेदानीं व्यतिरेकमुखेन दर्शयति—

**निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते॥**
**रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः॥ १८॥**

निश्चितायामिति॥ रज्जुरेवेति॥ रज्ज्वां निश्चितायां तदज्ञाननिवृत्तेस्तदुत्थसर्पादिविकल्पः सर्वथा निवर्तते, रज्जुमात्रं चाद्वैतमवशिष्यते सर्वम्। अपूर्वोऽनपरोऽनन्तरोऽबाह्यः, स बाह्याभ्यन्तरो ह्यजः, अजरोऽमरोऽमृत इत्येवँल्लक्षणो यदा संपद्यते तदा सर्वस्यात्माऽविद्याकल्पितस्य जीवादिविकल्पस्य व्यावृत्तेरद्वैतमेव आत्मतत्त्वं परिशिष्यते। तस्मादात्माविद्याविजृम्भिता जीवकल्पनेत्यर्थः॥ १८॥

यद्यात्मैक एवेति निश्चयः, कथं प्राणादिभिरनन्तैर्भावैरेतैः संसारलक्षणैर्विकल्पित इत्यभिप्रायप्रतिपत्त्याशङ्क्ते—

**प्राणादिभिरनन्तैस्तु भावैरेतैर्विकल्पितः॥**
**मायैषा तस्य देवस्य यया संमोहितः स्वयम्॥ १९॥**

प्राणादिभिरिति॥ सिद्धान्ती स्वाभिसन्धिमुद्घाटयन्नुत्तरमाह॥ मायेति॥ तस्यात्मनो देवस्यैषा मायैव। यथा मायाविना विहिता माया गगनमतिविमलं कुसुमितैः सफलपलाशैस्तरुभिराकीर्णमिव करोति, तथेयमपि देवस्य माया ययाऽयं स्वयमपि मोहित इव मोहितो भवति। मम माया दुरत्ययेति स्मरणादित्यर्थः॥ १९॥

के ते प्राणादयोऽनन्ता भावा यैरात्मा विकल्प्यते माययेत्यपेक्षायामादौ प्राणो हिरण्यगर्भस्तटस्थेश्वरो वा स जगतो हेतुरिति प्राणविदो हैरण्यगर्भाद्या वैशेषिकादयश्च कल्पयन्तीत्याह—

**प्राण इति प्राणविदो भूतानीति च तद्विदः॥**
**गुणा इति गुणविदस्तत्त्वानीति च तद्विदः॥ २०॥**

प्राण इति ॥ पृथिव्यप्तेजोवायवस्तत्त्वानि । तानि चत्वारि भूतानि जगत्कारणानीति लोकायतिका इत्याह ॥ भूतानीति॥सत्त्वरजस्तमांसि त्रयो गुणाः साम्येनावस्थिता जगतो महदादिलक्षणस्य कारणमिति सांख्याः कल्पयन्तीत्याह॥गुणा इति॥आत्माऽविद्याशिवा इति सङ्क्षेपतस्त्रीणि तत्त्वानि सर्वजगत्प्रवर्तकानीति शैवा मन्यन्त इत्याह॥तत्त्वानीति ॥ २० ॥

एकस्यात्मनो विश्वादयः पादाः सर्वव्यवहारहेतवो भवन्तीति केचिदित्याह–

**पादा इति पादविदो विषया इति तद्विदः ॥**
**लोका इति लोकविदो देवा इति च तद्विदः ॥ २१ ॥**

पादा इति ॥ शब्दादयो विषया भूयोभूयो भुज्यमानास्तत्त्वमिति वात्स्यायनप्रभृतीनां कल्पनामाह ॥ विषया इतीति ॥ भूर्भुवः स्वरिति त्रयो लोका वस्तुभूताः सन्तीति पौराणिका वदन्तीत्याह ॥ लोका इति ॥ अग्नीन्द्रादयो देवास्तत्तत्कर्मफलदातारो नेश्वरस्तथेति देवताकाण्डीया भवन्तीत्याह ॥ देवा इति ॥ २१ ॥

ऋग्वेदादयो वेदाश्चत्वारस्तत्त्वानीति पाठका वदन्तीत्याह–

**वेदा इति वेदविदो यज्ञा इति च तद्विदः ॥**
**भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः॥२२॥**

वेदा इति ॥ ज्योतिष्टोमादयो यज्ञा वस्तुभूता भवन्तीति बोधायनप्रभृतयो मन्यन्त इत्याह ॥ यज्ञा इति ॥ भोक्तैवात्मा न कर्त्तेति सांख्या इत्याह ॥ भोक्तेति ॥ सूपकारास्तु भोज्यवस्त्विवति प्रतिजानत इत्याह॥ भोज्यमिति ॥ २२ ॥

आत्मा सूक्ष्मोऽणुपरिमाणः स्यादिति केचिद् भ्रमन्तीत्याह–

**सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः ॥**
**मूर्त इति मूर्तविदोऽमूर्त इति च तद्विदः ॥ २३ ॥**

सूक्ष्म इतीति॥स्थूलो देहोऽहम्प्रत्ययादात्मेति लोकायतमतमाह ॥ स्थूल इति ॥ मूर्तस्त्रिशूलादिधारी महेश्वरश्चक्रादिधारी वा परमार्थो भवतीत्यागमिकाः कल्पयन्तीत्याह॥मूर्त इति॥अमूर्तः सर्वाकारशून्यो

निःस्वभावः परमार्थ इति शून्यवादिन इत्याह॥अमूर्त इति चेति ॥२३॥

कालः परमार्थ इति ज्योतिर्विदां कल्पनामाह–

**काल इति कालविदो दिश इति च तद्विदः ॥**
**वादा इति वादविदो भुवनानीति तद्विदः ॥ २४ ॥**

काल इति ॥ स्वरोदयविदस्तु दिशः परमार्था इत्याहुरित्याह ॥ दिश इति ॥ धातुवादो मन्त्रवादश्चेत्यादयो वादा वस्तुभूता भवन्तीति केचिदित्याह ॥ वादा इति ॥ भुवनानि चतुर्दश वस्तूनीति भुवनकोशविद इत्याह ॥ भुवनानीति ॥ २४ ॥

मन एवात्मेति लोकायतभेद इत्याह–

**मन इति मनोविदो बुद्धिरिति च तद्विदः ॥**
**चित्तमिति चित्तविदो धर्माधर्मौ च तद्विदः २५ ॥**

मन इति ॥ बुद्धिरेवात्मेति बौद्धाः कल्पयन्तीत्याह ॥ बुद्धिरिति ॥ चित्तमेव बाह्याकारशून्यं विज्ञानं, तदेवात्मेत्यपरे इत्याह ॥ चित्तमिति ॥ धर्माधर्मौ विधिनिषेधचोदनागम्यौ परमार्थाविति मीमांसका इत्याह ॥ धर्मेति ॥ २५ ॥

प्रधानं मूलप्रकृतिर्महदहङ्कारतन्मात्राणीति सप्त प्रकृतिविकृतयः, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च विषयाः मनश्चैकमिति षोडशविकारा एव । पुरुषस्तु दृशिस्वभाव इति पञ्चविंशतिसंख्याकः प्रपञ्चो वस्त्विति सांख्या भ्राम्यन्ते इत्याह–

**पञ्चविंशक इत्येके षड्विंश इति चापरे ॥**
**एकत्रिंशक इत्याहुरनन्त इति चापरे ॥ २६ ॥**

पञ्चविंशक इति ॥ पातञ्जलाः पुनरीश्वरमधिकं पश्यन्तः षड्विंशतिः पदार्था इति कल्पयन्तीत्याह ॥ षड्विंशक इति ॥ पाशुपातास्तु रागाविद्यानियतिकालकलामायाऽधिकास्ते एवैकत्रिंशत् पदार्था इति ब्रुवते इत्याह॥ एकत्रिंशक इति ॥ अनन्तपदार्थभेदो न नियतोऽस्तीति केचिदित्याह ॥ अनन्त इति ॥ २६॥

लोकानुरञ्जनमेव तत्त्वमिति लौकिकानां भ्रममाह–

लोकाँल्लोकविदः प्राहुराश्रमा इति तद्विदः ॥
स्त्रीपुंनपुंसकं लैङ्गाः परापरमथापरे ॥ २७ ॥

लोकानिति ॥ दक्षप्रभृतयस्तु, आश्रमाः परमार्था इति समर्थयन्त इत्याह ॥ आश्रमा इति ॥ वैयाकरणास्तु स्त्रीपुंनपुंसकं शब्दजातं तत्त्वमिति वर्णयन्तीत्याह ॥ स्त्रीति ॥ द्वे ब्रह्मणी वेदितव्ये परं चापरं चेत्याह ॥ परापरमिति ॥ २७ ॥

सृष्टिर्वा, लयो वा स्थितिर्वा तत्त्वमिति पौराणिका इत्याह—

सृष्टिरिति सृष्टिविदो लय इति च तद्विदः ॥
स्थितिरिति स्थितिविदः सर्वे चेह तु सर्वदा ॥ २८ ॥

सृष्टिरित्यादिना ॥ यथोक्तकल्पनानामधिष्ठानं सूचयति ॥ सर्वे चेति ॥ उदाहृताश्चानुदाहृताश्च कल्पना यावन्तो विद्यन्ते ते सर्वेऽपि रज्ज्वामिव सर्पादयस्तच्छून्य आत्मन्यात्मस्वरूपानिश्चयहेतोरविद्यया सर्वदैव कल्पिता इत्यर्थः ॥ २८ ॥

लौकिकानां परीक्षकाणां च कतिपयकल्पनाभेदानुदाहृत्यानन्तत्वादशेषतस्तेषामुदाहर्तुमशक्यत्वं दृष्ट्वा संक्षेपमाचष्टे—

यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति ॥
तं चावति स भूत्वाऽसौ तद्ग्रहः समुपैति तम् ॥२९॥

यं भावमिति ॥ प्राणादीनामन्यतममुक्तमनुक्तं वाऽन्यं यं भावं पदार्थं दर्शयेद्यस्याचार्योऽन्यो वाऽऽप्त इदमेव तत्त्वमिति सोऽधिकारी तं भावमात्मभूतं पश्यत्ययमहमिति वा ममेति वा ॥ तं च द्रष्टारं स भावोऽवति । यो दर्शितो भावोऽसौ भूत्वा साधकपुरुषतादात्म्यमापद्य रक्षति । साक्षादसाधारणरूपत्वेन स्वस्मिन्नेव निष्ठामापाद्य ततोऽन्यत्र प्रवृत्तिमुपासकस्य निवारयतीत्यर्थः । तस्मिन् ग्रहस्तद्ग्रहस्तदभिनिवेश इदमेवतत्त्वमिति स तद्ग्रहः, तं ग्रहीतारमुपैति तस्यात्मभावं निगच्छतीति चतुर्थपादार्थमाह ॥ तद्ग्रह इति ॥ एतेनाऽन्यत्र प्रवृत्तिनिरोधे हेतुरुक्तः ॥ २९ ॥

तर्हि प्राणादीनामात्मवदेव तात्त्विकत्वं प्राप्तमित्याशङ्क्य कल्पितानामधिष्ठानातिरेकेणावस्तुत्वान्नैवमित्याह—

**एतैरेषोऽपृथग्भावैः पृथगेवेति लक्षितः ॥**
**एवं यो वेद तत्त्वेन कल्पयेत् सोऽविशङ्कितः ॥ ३० ॥**

एतैरिति ॥ एतैः प्राणादिभिरात्मनोऽपृथग्भूतैः रज्जुरिव सर्पादिविकल्पनारूपैर्भावैरेष आत्मा पृथगेवेति लक्षितो निश्चितो मूढैः । विवेकिनां तु रज्ज्वामिव कल्पिताः सर्पादयो नात्मव्यतिरेकेण प्राणादयः सन्ति । इदं सर्वं यदयमात्मेति श्रुतेरित्यर्थः । उक्तज्ञानस्तुत्यर्थमाह ॥ एवमिति ॥ एवमात्मव्यतिरेकेणाऽसत्त्वं रज्जुसर्पवदात्मनि कल्पितानामात्मानं च केवलं निर्विकल्पं यो वेद तत्त्वेन पूर्वोक्तश्रुतितः स्वप्नवत् प्रपञ्चमिथ्यात्वसाधकोक्तदृश्यत्वादियुक्तितश्च सोऽविशङ्कितो वेदार्थे, विभागतो ज्ञानकाण्डं साक्षादद्वैतवस्तुपरं, कर्मकाण्डं तु साध्यसाधनसम्बन्धबोधनद्वारा परम्परया ज्ञानोत्पादनपरमित्येवंरूपम् । संशयविरहितः सन् कल्पयेत् कल्पयति । सर्वे वेदा यत्पदमामनन्तीति श्रवणात् । न ह्यनध्यात्मविद् वेदार्थतत्त्वं ज्ञातुं शक्नोति तत्त्वतः । न ह्यनध्यात्मवित् कश्चित् क्रियाफलमवाप्नुयादिति हि मानववचनम् । क्रियाशब्देन वेदान्तवाक्यान्युच्यन्ते तत्फलं तत्त्वज्ञानम् । अग्निहोत्रादिक्रियायाश्च बुद्धिशुद्धिद्वारा ज्ञानोत्पत्त्युपयोगिनीत्वमिति स्मृतिस्थपदस्यार्थः ॥ ३० ॥

यदेतद् द्वैतस्यासत्त्वमुक्तं युक्तितस्तदेतद्वेदान्तप्रमाणावगतमित्याह—

**स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा ॥**
**तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥ ३१ ॥**

स्वप्नेति ॥ स्वप्नश्च माया च स्वप्नमाये यथा असद्वस्त्वात्मिके असत्ये सद्वस्त्वात्मिके इव लक्ष्येते अविवेकिभिः, यथाच प्रसारितपण्यापणगृहप्रासादस्त्रीपुञ्जनपदव्यवहाराकीर्णमिव गन्धर्वनगरं दृश्यमानमेव सदकस्मादभावतां गतं दृष्टं, तथा विश्वमिदं द्वैतं समस्तमसद् दृष्टमित्यर्थः । क्वेत्याह ॥ वेदान्तेष्विति ॥ नेह नानाऽस्ति किञ्चन, इन्द्रो मायाभिरात्मैवेदमग्र आसीद्, ब्रह्मैवेदमग्र आसीत्, द्वितीयाद्वै भवति, न तु तद् द्वितीयमस्ति, यत्र त्वस्य सर्वमात्मैवाऽभूदित्यादिषु विचक्षणैर्निपुणतरवस्तुदर्शिभिः पण्डितैः । तमःश्वभ्रनिभं दृष्टं वर्षबुद्बुदसन्निभम् *नाशप्रायं सुखाद्धीनं नाशोत्तरमभावगमिति व्यासस्मृतेरित्यर्थः । तमसि मन्दान्धकारे रज्ज्वामधिष्ठाने भू-

च्छिद्रमिति यद्भ्रान्त्या भाति तन्निभं तत्तुल्यं विवेकिभिर्विश्वं दृष्टमिति स्मृतिस्थपदस्यार्थः ॥ ३१ ॥

यदा प्रमाणयुक्तिभ्यां वितथं द्वैतमात्मैकः परमार्थतः सन् तदा इदं निष्पन्नं भवति । सर्वोऽयं लौकिको वैदिकश्च व्यवहारोऽविद्याविषय एवेति प्रकरणार्थमुपसंहरति—

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥**
**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ३२ ॥**

न निरोध इति ॥ निरोधनं निरोधः प्रलयः, उत्पत्तिर्जननं, बद्धः संसारी जीवः, साधकः साधनान्मोक्षस्य, मुमुक्षुर्मोचनार्थी, मुक्तो विमुक्तबन्धनः । उत्पत्तिप्रलययोरभावाद् बद्धादयो न सन्तीत्येषा परमार्थतेत्याह ॥ इत्येषेति ॥ ३२ ॥

यदुक्तं निरोधाद्यभावस्य परमार्थतेति, तदयुक्तम् । सामान्यविशेषात्मकं वस्तु नानारसमिति मते निरोधादेः सुसाध्यत्वादित्याशङ्क्याह—

**भावैरसद्भिरेवायमद्वयेन च कल्पितः ॥**
**भावा अप्यद्वयेनैव तस्माद्द्वयता शिवा ॥ ३३ ॥**

भावैरिति ॥ भावाः व्यावृत्ता विशेषाः । ते च व्यभिचारित्वादसन्तो, रज्जुसर्पवत् । तैरद्वयमनुवृत्तं सामान्यं, तेन चायमव्यावृत्तोऽनुगतपूर्णसत्ताचिदेकतानः सन्नात्मैव मूढैर्मोहमाहात्म्यात् कल्प्यते, न वस्तुतः सामान्यविशेषभावोऽस्ति । परस्पराश्रयत्वादित्यर्थः । विशेषाणामसत्त्वे कथन्त्वेन व्यवहारःस्यादित्याशङ्क्य सत्तातादात्म्येन कल्पितत्वात् तेषां सत्त्वेन व्यवहारोपपत्तिरित्याह ॥ भावा इति ॥ अनुगतसत्ताकारेण कल्पिताः सत्त्वव्यवहारा भवन्तीति शेषः । सामान्यविशेषभावस्य कल्पितत्वादखण्डैकरसत्वे वस्तुनः सिद्धे निरोधादेर्दुःसाधनत्वमुचितमिति फलितमाह ॥ तस्मादिति ॥ अद्वयता अभयता सैव शिवेत्यर्थः ॥ ३३ ॥

यदुक्तम् अद्वयता शिवेति, तत्र हेत्वन्तरोपन्यासपरत्वं श्लोकस्य दर्शयति—

**नाऽऽत्मभावेन नानेदं न स्वेनापि कथञ्चन ॥**
**न पृथङ्नापृथक्किञ्चिदिति तत्त्वविदो विदुः ॥ ३४ ॥**

नेत्यादिना ॥ इदं हि नानाभूतं द्वैतं नात्मतादात्म्येन सेद्धुमर्हति। जडाजडयोर्विरुद्धस्वभावयोस्तादात्म्यायोगात् । भेदादिशून्यात्मतादात्म्ये च द्वैतस्य नानात्वासिद्धेरित्यर्थः । स्वेन सत्ताप्रतीत्योरन्यानपेक्षतालक्षणस्वातन्त्र्येणापि नेदं द्वैतं सेद्धुं पारयति । तथा स्वातन्त्र्ये सत्यात्मत्वप्रसङ्गादनात्मनो द्वैतत्वापातादित्याह ॥ न स्वेनेति ॥ न हि किञ्चिदपि द्वैतं परस्परं पृथगेव सिद्ध्यति, दुर्निरूप्यात्वादित्याह ॥ न पृथगिति ॥ नापि किञ्चिदन्योन्यमपृथग्भूत्वा सिद्ध्यति । घटपटादिशब्दानां पर्यायत्वप्रसङ्गाद्व्यवहारलोपादित्याह ॥नापृथगिति॥ अतो वास्तवाकारेण सर्वथा निरूपणादद्वैतता शिवा निश्चितेत्याह ॥ इतीति ॥ ३४ ॥

किमिति यथोक्तमद्वैतं सर्वेषां न प्रतीतिगोचरतामाचरतीत्याशङ्क्य रागादिप्रतिबन्धविधुराणामेव यथोक्तमद्वैतदर्शनं न सर्वेषामिति सम्यग्दर्शनं स्तौति—

**वीतरागभयक्रोधैर्मुनिभिर्वेदपारगैः ।**
**निर्विकल्पो ह्ययं दृष्टः प्रपञ्चोपशमोऽद्वयः ॥ ३५ ॥**

वीतेति ॥विगतरागभयक्रोधद्वेषादिसर्वदोषैः सर्वदा मुनिभिर्मननशीलैर्विवेकिभिर्वेदपारगैरवगतवेदार्थतत्त्वैर्ज्ञानिभिर्निर्विकल्पः सर्वप्राणादिविकल्पशून्योऽयमात्मा दृष्ट उपलब्धो वेदान्तार्थतत्परैः। प्रपञ्चोपशमः प्रपञ्चो द्वैतभेदविस्तारः, तस्योपशमोऽभावो यस्मिन् स आत्मा प्रपञ्चोपशमः । अत एवाद्वयः विगतदोषैरेव पण्डितैर्वेदान्तार्थतत्परैः संन्यासिभिः परमात्मा द्रष्टुं शक्यो, नान्यैः रागादिकलुषितचेतोभिः स्वपक्षपातदर्शनैस्तार्किकादिभिरित्यभिप्रायः ॥३५॥

मिथ्याज्ञानप्रचयसंस्काराद्वेदान्तार्थतात्पर्यवतां पण्डितानामपि नाद्वैते प्रत्ययदार्ढ्यं सिद्ध्यतीत्याह—

**तस्मादेवं विदित्वैनमद्वैते योजयेत् स्मृतिम् ॥**
**अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत् ॥ ३६ ॥**

तस्मादिति ॥ शास्त्रादद्वैतमवगम्य स्मृतिसन्ततिं कुर्वतो लोकाऽनुवर्तने विधिनियममाह ॥ अद्वैतमिति ॥ यस्मात् सर्वानर्थप्रशमरूपत्वादद्वयं शिवमभयमत एवं विदित्वा एनमात्मानमद्वैते योजयेद् अद्वै-

तावगमायैव स्मृतिं कुर्यात् । तच्चाद्वैतमवगम्याहमस्मि परं ब्रह्मेति विदित्वाऽशनायाद्यतीतं साक्षादपरोक्षादजमात्मानं सर्वलोकव्यवहारातीतो जडवल्लोकमाचरेदप्रख्यापयन्नात्मानमहमेवंविध इत्यभिप्रायः ॥ ३६ ॥

कया चर्यया लोकमाचरेदित्याह–

निस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च ॥
चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ॥ ३७ ॥

निःस्तुतिरिति ॥ स्तुतिनमस्कारादिसर्वकर्मवर्जितस्त्यक्तसर्वबाह्यैषणःप्रतिपन्नपरमहंसपारिव्राज्यः,एतं वै तमात्मानं विदित्वेत्यादिश्रुतेः । तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाइत्यादिस्मृतेश्चेत्यभिप्रायः । चलं शरीरं प्रतिक्षणमन्यथाभावादचलमात्मतत्त्वं, ते निकेतो यस्य सोऽयं चलाचलनिकेतो विद्वान्न पुनर्बाह्यविषयाश्रय इत्याह ॥ चलेति ॥ स च यादृच्छिको भवेत् । यदृच्छाप्राप्तकौपीनाच्छादनग्रासमात्रदेहस्थितिरित्याह ॥ यतिरिति ॥ ३७ ॥

अहमेव परं ब्रह्म, नमत्तोऽन्यदस्ति किञ्चिदितिस्मृतिसन्तातिकरणमपि न कालविशेषनियतं, किन्तु नैरन्तर्येण कर्तव्यमित्याह–

तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः ॥
तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत् ॥ ३८ ॥

इति श्रीगौडपादीयकारिकासु वैतथ्याख्यं
द्वितीयप्रकरणम् ॥ २ ॥

तत्त्वमिति ॥ आध्यात्मिकं शरीरादिकल्पितं तत्त्वमधिष्ठानमात्रं दृष्ट्वा बाह्यतो देहाद् बहिरवस्थितं पृथिव्यादि च कल्पितत्वेनावस्तुत्वादधिष्ठानमात्रमेवेत्यनुभूय स्वयमपि द्रष्टा परमार्थवस्तुस्वभावमात्र एवासक्तचेताः,बाह्येभ्यो विषयेभ्यो व्यावृत्तबुद्धिस्तस्मिन्नेव तत्त्वे परमार्थभूते प्रतिष्ठितस्तद्दर्शननिष्ठः स्यात् । वाचारम्भणं विकारो नामधेयं, स बाह्याभ्यन्तरो ह्यजः, शुनि चैव श्वपाके च, समं सर्वेषु भूतेष्वित्यादिश्रुतिस्मृतेरित्यर्थः ॥ ३८ ॥

इति श्रीगौडपादीयश्लोकवृत्तौ वैतथ्याख्यं द्वितीयं प्रकरणम् ॥ २ ॥

## अथ तृतीयं प्रकरणम् ॥ ३ ॥

तर्कावष्टम्भेन द्वैतवैतथ्यनिरूपणं परिसमाप्याद्वैतपारमार्थिकत्वमपि तर्कतः संभावयितुं प्रकरणान्तरं प्रारिप्सुरुपास्योपासकभेददृष्टिं तावदपवदति–

**ॐ ॥ उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते ॥**
**प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृतः ॥ १ ॥**

उपासनेति ॥ देहस्य धारणाद्धर्मो जीवो भूतसंघाताकारेण जाते ब्रह्मणि तदभिमानित्वेन वर्तते । स प्रागुत्पत्तेरजं सर्वमित्येवं कालावच्छिन्नं वस्तु मन्यते । स पुनरुपासनां पुरुषार्थसाधनत्वेनाश्रितस्तदेव ब्रह्म प्रतिपत्स्ये शरीरपातादूर्ध्वमित्येवं यतो मिथ्याज्ञानवानवतिष्ठते।तेनाऽसौ कृपणोऽल्पको ब्रह्मविद्भिः स्मृतश्चिन्तित इत्यर्थः ॥१॥

भेददर्शिनमुपासकमद्वैतविरोधिनं निन्दित्वा संप्रत्यद्वैतप्रतिज्ञां करोति–

**अतो वक्ष्याम्यकार्पण्यमजाति समतां गतम् ॥**
**यथा न जायते किञ्चिज्जायमानं समन्ततः ॥ २ ॥**

अत इति॥स बाह्याभ्यान्तरमजमात्मानं प्रतिपत्तुमशक्नुवन्नविद्यया दीनमात्मानं मन्यमानः कृपणो भवति यस्मात्, अतो वक्ष्याम्यकाऽर्पण्यमकृपणभावमजं ब्रह्मेत्यर्थः । जातिर्जन्म तद्रहितमजातिम् । तत्र हेतुमाह ॥ समतामिति ॥ सर्वात्मना साम्यं निर्विशेषत्वं गतमित्यर्थः । यथा रज्ज्वां सर्पो भ्रान्त्या जायते तथा सर्वभ्रान्तिदृष्ट्या जायमानमपि यथा येन प्रकारेण किञ्चिदल्पमपि वस्तुतो न जायते, किन्तु समन्ततः समन्तात् सर्वतो देशतः कालतो वस्तुतश्च पूर्णं कूटस्थमेव वस्तु भवति तथा तं प्रकारं वक्ष्यामीति जन्मराहित्यं साधयति ॥यथेति॥२॥

प्रतिज्ञावाक्ये ब्रह्मशब्देन परमात्मा प्रकृतः । स कीदृगित्यपेक्षायामाह–

**आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः ॥**
**घटादिवच्च सङ्घातैर्जातावेतन्निदर्शनम् ॥ ३ ॥**

आत्मा हीति ॥ जीवभेदप्रतीतिस्तर्हि कथमित्याशङ्क्याह ॥ जीवैरिति ॥ यथाकाशो विभुत्वादिधर्मः स्वगततात्त्विकभेदवान्न भवति तथा परमात्मा विशेषाभावात् । यथा च महाकाशो घटाकाशाकारेण प्रतीयते तथा परमात्मा नानाविधजीवाकारेण प्रतीतिगोचरो भवतीत्यर्थः । यथा मृदः सकाशाद् घटादयो जायन्ते तथा परमात्मैव पृथिव्यादिसङ्घाताकारेण जायत इत्याह ॥ घटादिवदिति ॥ यदा मन्दबुद्धिं प्रतिपिपादयिषया श्रुत्यात्मनो जातिरुच्यते । जीवादीनां तदा जातावुपगम्यमानायामेतन्निदर्शनं दृष्टान्तो यथोदित आकाशवदित्याह ॥ जाताविति ॥ ३ ॥

अद्वैतस्य जीवसृष्टिश्रुतिविरोधं परिहृत्य तस्यैव प्रलयश्रुत्या विरोधं परिहरति—

**घटादिषु प्रलीनेषु घटाकाशादयो यथा ॥**
**आकाशे संप्रलीयन्ते तद्वज्जीवा इहाऽऽत्मनि ॥ ४ ॥**

घटादिष्विति ॥ यथा घटाद्युत्पत्त्या घटाकाशाद्युत्पत्तिः । यथा च घटादिप्रलये घटाकाशादिप्रलयः । तद्वद्देहादिसङ्घातोत्पत्त्या जीवोत्पत्तिस्तत्प्रलये च जीवानामिहात्मनि प्रलयो, न स्वत इत्यर्थः ॥ ४ ॥
सर्वदेहेष्वात्मैकत्वे एकस्मिन् जननमरणसुखादिमत्यात्मनि सर्वात्मनां तत्सम्बन्धः क्रियायाः फलसाङ्कर्यं च स्यादित्यव्यवस्थामाशङ्क्याह—

**यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते ॥**
**न सर्वे संप्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः ॥ ५ ॥**

यथेति ॥ यथा एकस्मिन् घटाकाशे रजोधूमादिभिर्युते संयुक्ते, न सर्वे घटाकाशादयस्तद्रजोधूमादिभिः संयुज्यन्ते, तद्वदेकस्मिञ्जीवे सुखादिसंयुक्ते सत्यऽपरे जीवास्तैरेव सुखादिभिर्न संयुज्यन्ते । औपाधिकभेदादित्याह ॥ तद्वदिति ॥ ५ ॥

अद्वैतस्य श्रुत्यादिविरोधाभावेऽपि, विमता जीवास्तत्त्वतो भिद्यन्ते, भिन्ननामकत्वाद् भिन्नकार्यकरत्वाद् भिन्नरूपत्वात्, घटपटादिवदित्यनुमानविरोधमाशङ्क्य व्यभिचारित्वेनानुमानं दूषयति—

**रूपकार्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै ॥**
**आकाशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णयः ॥ ६ ॥**

रूपेति ॥ यथेहाकाश एकस्मिन् घटकरकापवरकाद्याकाशाना-मल्पत्वमहत्त्वादिरूपाणि भिद्यन्ते, तथा कार्यमुदकाहरणधारणशयनादि, समाख्याश्च- घटाकाशः करकाकाश इत्याद्यास्तत्कृताश्च भिन्ना दृश्यन्ते तत्र तत्र वै व्यवहारविशेषे सर्वोपमाकाशे रूपादिभेदकृतो व्यवहारो न परमार्थ एव, परमार्थतस्त्वाकाशस्य न भेदोऽस्ति।तद्वद्देहोपाधिभेदकृतेषु जीवेषु घटाकाशस्थानीयेष्वात्मसु निर्णयो निश्चयः कृतो बुद्धिमद्भिरित्यर्थः ॥ ६ ॥

ननु तत्र परमार्थकृत एव घटाकाशादिषु रूपकार्यादिभेदव्यवहार इतिचेद्, नेत्याह-

**नाऽऽकाशस्य घटाकाशो विकारावयवौ यथा ॥**
**नैवाऽऽत्मनः सदा जीवो विकारावयवौ तथा ॥ ७ ॥**

नेति ॥ यस्मात् परमार्थाकाशस्य घटाकाशो न विकारो, यथा सुवर्णस्य रुचकादि यथा वाऽपां फेनबुद्बुदहिमादिः । नाप्यवयवो, यथा वृक्षस्य शाखादिः । न तथाकाशस्य घटाकाशो विकारावयवौ यथा तथा नैवात्मनः परस्य परमार्थसतो महाकाशस्थानीयस्य घटाकाशस्थानीयो जीवः सदा सर्वदा यथोक्तदृष्टान्तबलेन विकारो, नाप्यवयवः । अत आत्मभेदकृतो व्यवहारो मृषैवेत्यर्थः ॥ ७ ॥

जीवो ब्रह्मणो नांऽशो न विकारः, अपि तु ब्रह्मैवोपाध्यनुप्रविष्टं जीवशब्दितमित्युक्तम् । तदयुक्तम् । ब्रह्मणः शुद्धत्वाज्जीवस्य रागादिमलवत्त्वादनेकत्वादेकत्वायोगादित्याशङ्क्य परमार्थतो जीवस्यापि नास्ति मलवत्त्वमित्याह—

**यथा भवति बालानां गगनं मलिनं मलैः ॥**
**तथा भवत्यबुद्धानामात्माऽपि मलिनो मलैः ॥ ८ ॥**

यथेति ॥ यथा भवति लोके बालानामविवेकिनां गगनमाकाशं घनरजोधूमादिमलैर्मलिनं मलवत् । न गगनं मलवद् याथात्म्यविवेकिनाम् । तथा भवत्यात्मा परोऽपि यो विज्ञाता प्रत्यक्क्लेशकर्मफलैर्मलिनोऽबुद्धानां प्रत्यगात्मविवेकरहितानां, नात्मविवेकवताम् । न हि ऊषरदेशस्तटवत्प्राण्यध्यारोपितोदकफेनतरङ्गादिमान् । तथा नाऽऽत्मा अबुधारोपितक्लेशादिमलैर्मलिनो भवतीत्यर्थः ॥ ८ ॥

पुनरप्युक्तमेवार्थं प्रपञ्चयति-

मरणे संभवे चैव गत्यागमनयोरपि ॥
स्थितौ सर्वशरीरेषु आकाशेनाविलक्षणः ॥ ९ ॥

मरणे इति ॥ जीवो मरणानन्तरं धर्माऽनुरोधेन स्वर्गं गच्छति। अधर्मवशाच्च नरकं प्रतिपद्यते। धर्माधर्मयोश्च भोगेन क्षये पुनरागत्य योनिविशेषे सम्भवति। तत्र यावद्भोगं स्थित्वा पुनरपि परलोकाय प्रतिष्ठते इत्येवमादिः सर्वशरीरेष्वात्मनो जन्ममरणादिव्यवहार आकाशेनाविलक्षणो घटाकाशजन्मनाशगमनागमनस्थितिवत् प्रत्येतव्यो न परमार्थत इत्यर्थः ॥ ९ ॥

ननु सङ्घातशब्दितानामुपाधीनां सत्यत्वात् तत्प्रयुक्तभेदस्यापि तथात्वादद्वैतानुपपत्तितादवस्थ्यमितिचेत्तत्राह–

संघाताः स्वप्नवत् सर्वे आत्ममायाविसर्जिताः ॥
आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥ १० ॥

सङ्घाता इति ॥ घटादिस्थानीयास्तु देहादिसङ्घाताः स्वप्नदृश्यदेहादिवन्मायाविकृतदेहादिवच्चात्ममायाविसर्जिताः। आत्मनो मायाऽविद्या तया प्रत्युपस्थापिता, न परमार्थतः सन्तीत्यर्थः।देवादिदेहानां पूज्यतमत्वेनाधिक्याभ्युपगमान्नाविद्याकृतत्वमित्याशङ्क्याह ॥आधिक्य इति ॥ यद्यप्याधिक्यभावस्तिर्यग्देहाद्यपेक्षया देवादिकार्यकरणसंघातानां, यदि वा सर्वेषां देहानां पञ्चभूतात्मकत्वाविशेषात् साम्ये स्वीकृते नास्ति संघातेषु पुनः सत्यत्वे काचिदुपपत्तिः। सद्भावप्रतिपादको हेतुर्यस्मान्नास्ति। तस्मादविद्याकृता एव, न परमार्थतः संभवन्तीत्यर्थः ॥ १० ॥

जीवस्याद्वितीयब्रह्मत्वमुपपत्त्यवष्टम्भेनोपपादितमिदानीं तत्रैव तैत्तिरीयकश्रुतेस्तात्पर्यमाह–

रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके ॥
तेषामात्मा परो जीवः खं यथा संप्रकाशितः ॥ ११ ॥

रसादयो हीति ॥ रसादयः, अन्नरसमयः प्राणमय इत्येवमादयः कोशाः कोशा इव कोशा अस्यादेरिवोत्तरोत्तरस्यापेक्षया बहिर्भावात् पूर्वस्य पूर्वस्य व्याख्याता विस्पष्टमाख्यातास्तैत्तिरीयके तैत्तिरीयकशाखोपनिषद्वल्ल्याम्। तेषां कोशानामात्मा येनात्मनाऽयं चाऽपि कोशा

आत्मवन्तोऽन्तरतमेन स हि सर्वेषां जीवननिमित्तत्वाज्जीवः। कोऽसावित्याह॥ पर एवात्मा, यः पूर्वं, सत्यं ज्ञानमनन्तं ब्रह्मेति प्रकृतः स आत्मा अस्माभिर्यथा खं तथा सम्प्रकाशितः, आत्मा ह्याकाशवदित्यादिश्लोकैः, न तार्किकपरिकल्पितात्मवत् पुरुषबुद्धिप्रमाणगम्य इत्यभिप्रायः॥ ११॥

मनुष्योऽहं प्राण्यहं प्रमाताऽहं कर्ताहं भोक्ताहमिति पञ्चानां यदेकं स्वरूपमनुगतं प्रत्यक्चैतन्यं तद्ब्रह्मैवेति जीवपरयोरैक्ये तैत्तिरीयकश्रुतेस्तात्पर्यमुक्त्वा तत्रैव बृहदारण्यकश्रुतेरपि तात्पर्यमाह—

**द्वयोर्द्वयोर्मधुज्ञाने परं ब्रह्म प्रकाशितम्॥**
**पृथिव्यामुदरे चैव यथाऽऽकाशः प्रकाशितः॥ १२॥**

द्वयोरिति॥ ब्रह्मविद्याख्यं मध्वमृतम्। अमृतत्वं मोदनहेतुत्वाद्विज्ञायते यस्मिन्निति मधुज्ञानं मधुब्राह्मणम्। तस्मिन्मधुब्राह्मणे बहुषु पर्यायेषु अधिदैवाध्यात्मविभक्तयोः स्थानयोरयमेव स इति परं ब्रह्म प्रत्यग्भूतं प्रकाशितमित्यर्थः। पृथिव्यामुदरे चैव यथैक आकाशोऽनुमानेन प्रकाशितो लोके तद्वदिति दृष्टान्तमाह॥ पृथिव्यामिति॥ १२॥

इतश्चैकत्वे श्रुतीनां तात्पर्यमित्याह—

**जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते॥**
**नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसम्॥ १३॥**

जीवात्मनोरिति॥यद् युक्तितः श्रुतितश्च निर्द्धारितं जीवस्य परस्य चात्मनोरनन्यत्वमभेदेन, ब्रह्मविद् ब्रह्मैव भवतीत्यादिना ब्रह्मभावफलवादेन प्रशस्यते स्तूयते शास्त्रेण, व्यासादिभिश्च- वासुदेवः सर्वमिति स महात्मा सुदुर्लभः, अहं हरिः सर्वमिदं जनार्दनो नान्यस्ततः कारणकार्यजातमित्यादिवाक्यैरित्यर्थः। यत् प्रशस्यते तद्विधेयमित्यादिन्यायादेकत्वं प्रशस्तत्वाद्विवक्षितमिति भावः। यच्चानेकत्वं सर्वप्राणिसाधारणं तन्निन्द्यमानं दृश्यते, न तु तद् द्वितीयमस्ति, द्वितीयाद्वै भयं भवति, उदरमन्तरं कुरुते अथ तस्य भयं भवतीत्यादिवाक्यैः। या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः * सर्वास्ता निष्फलाः प्रेत्य तमोमूला हि ताः स्मृता इत्यादिस्मृतिवाक्यैश्च। यन्निन्द्यते तन्निषिध्यते इति न्यायान्नानात्वं शास्त्रार्थो न भवतीत्याह॥ नानात्वमिति॥ तदुभयमेकत्वप्रशंसनं नानात्वनिन्दनं चैवमेकत्वमेव

शास्त्रीयमित्यभ्युपगमे सति युक्तमिति फलितमाह ॥ तदेवं हीति॥१३॥

न भेदवादानामुत्प्रेक्षामात्रमूलत्वं, श्रुतिमूलत्वादित्याशङ्क्य परिहरति—

**जीवात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेः प्रकीर्तितम् ॥**
**भविष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते ॥ १४ ॥**

जीवात्मनोरिति ॥ उत्पत्तिः व्युत्पत्तिः । सम्यग्ज्ञानम् । तदर्थोपनिषदां प्रवृत्त्यपेक्षया प्राक्प्रवृत्तकर्मकाण्डे यत् परापरयोर्नानात्वमुक्तं, तदोदनं पचतीति भविष्यद्वृत्त्या तन्दुलेष्वोदनत्ववद्गौणमेव, न मुख्यभेदार्थत्वं श्रुतेर्युज्यते । भेदस्यापूर्वत्वपुरुषार्थत्वयोरभावादित्यर्थः ॥ १४ ॥

सृष्ट्यादिश्रुतिषु शब्दशक्तिवशादेव सृष्ट्यादिभेददृष्टेरद्वैतानुपपत्तिरित्याशङ्क्याह—

**मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ॥**
**उपायः सोऽवताराय नास्ति भेदः कथञ्चन ॥ १५ ॥**

मृल्लोहेति ॥ मृल्लोहविस्फुलिङ्गादिदृष्टान्तोपन्यासैः सृष्टिर्या चोदिता प्रकाशितान्यथान्यथा च स सर्वः सृष्टिप्रकारो जीवपरमात्मैकत्वबुद्ध्यवतारायोपायोऽस्माकम् । यथा प्राणसंवादे वागाद्यासुरपाप्मवेधाद्याख्यायिका कल्पिता प्राणवैशिष्ट्यबोधावताराय । अतो नास्त्युत्पत्त्यादिकृतो भेदः कथञ्चनेत्यर्थः ॥ १५ ॥

उत्पत्त्यादिश्रुतिविरोधमद्वैते परिहृत्योपासनविध्यनुपपत्तिविरोधं परिहरति—

**आश्रमास्त्रिविधा हीनमध्यमोत्कृष्टदृष्टयः ॥**
**उपासनोपदिष्टेयं तदर्थमनुकम्पया ॥ १६ ॥**

आश्रमा इति ॥ आश्रमिणो वर्णिनश्च कार्यब्रह्मोपासका हीनदृष्टयः । कारणब्रह्मोपासका मध्यमदृष्टयः । अद्वितीयब्रह्मदर्शनशीला उत्तमदृष्टयः । एवमेतेषु त्रिविधेषु मध्ये स्वेषां मन्दानां मध्यमानां च उत्तमदृष्टिप्रवेशार्थं दयालुना वेदेनोपासनोपदिष्टा । तथाचोपासनाऽनुष्ठानद्वारेणोत्तमामेकत्वदृष्टिं क्रमेण प्राप्ता उत्तमेष्वेवाऽन्तर्भवन्त्यतो न तद्विरोधोऽपीत्यर्थः ॥ १६ ॥

अद्वैतदर्शनस्योपासनादिविधिविरोधाभावेऽपि मतान्तरैर्विरोधोऽस्तीत्याशङ्क्य तेषां भ्रान्तिमूलत्वान्नैवमित्याह–

**स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् ॥**
**परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥ १७ ॥**

स्वसिद्धान्तेति ॥ स्वसिद्धान्तरचनानियमेषु कपिलकाणादबुद्धार्हतादिदृष्ट्यनुसारिणो द्वैतिनो निश्चिताः–एवमेवैष परमार्थो, नान्यथेति तत्र तत्रानुरक्ताः प्रतिपक्षं चात्मनः पश्यन्तस्तं द्विषन्त इत्येवं रागद्वेषोपेताः स्वसिद्धान्तदर्शननिमित्तमेव परस्परमन्योन्यं विरुध्यन्ते । तैरन्योन्यविरोधिभिरस्मदीयोऽयं वैदिकः सर्वानन्यत्वादात्मैकत्वदर्शनपक्षो न विरुध्यते, यथा स्वहस्तपादादिभिः । एवं रागद्वेषादिदोषानास्पदत्वादात्मैकत्वबुद्धिरेव सम्यग्दर्शनमित्यभिप्रायः ॥ १७ ॥

द्वैतपक्षैरद्वैतपक्षस्य स्वमतपर्यालोचनया अविरोधमाह–

**अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते ॥**
**तेषामुभयथा द्वैतं तेनायं न विरुध्यते ॥ १८ ॥**

अद्वैतमिति ॥ अद्वैतं परमार्थो हि यस्माद् द्वैतं नानात्वं तस्याद्वैतस्य भेदस्तस्य कार्यम् एकमेवाद्वितीयं, तत्तेजोऽसृजतेति श्रुतेः कार्यस्य च कारणाद् भेदेन सत्त्वनिषेधादित्यर्थः । मिथ्याभूतेन द्वैतेन अद्वैतस्याविरोधेऽपि परमार्थभूतेन विरोधः स्यादित्याशङ्क्य तथाविधं द्वैतमेव नास्तीत्याह ॥ तेषामिति ॥ द्वैतिनां तु तेषां परमार्थतश्चापरमार्थतश्चोभयथा द्वैतमेव । यदि च तेषां भ्रान्तानां द्वैतदृष्टिः, अस्माकमद्वैतदृष्टिरभ्रान्तानां, तेनायं हेतुनाऽस्मत्पक्षो न विरुध्यते तैः । इन्द्रो मायाभिः,न तु तद्द्वितीयमस्ति इति श्रुतेः । यथा मत्तगजारूढः उन्मत्तं भूमिष्ठं प्रति गजारूढोऽहं वाहय मां प्रतीति ब्रुवाणमपि तं प्रति न वाहयत्यविरोधबुद्ध्या तद्वदित्यर्थः ॥ १८ ॥

द्वैतमद्वैतभेद इत्युक्ते द्वैतमप्यद्वैतवत् परमार्थसदितिचेन्नेत्याह–

**मायया भिद्यते ह्येतन्नान्यथाऽजं कथञ्चन ॥**
**तत्त्वतो भिद्यमाने हि मर्त्यतामसृतं व्रजेत् ॥ १९ ॥**

माययेति ॥ परमार्थसदद्वैतं मायया भिद्यते ह्येतत्तैमिरिकानेकचन्द्रवद्, रज्जुः सर्पधारादिभिर्भेदैरिव निरवयवमजं ह्यात्मतत्त्वम् ।

नान्यथा परमार्थतः, कथञ्चन केनचिदपि कार्यत्वधर्मत्वादिप्रकारेण न भिद्यत इत्यर्थः । विवर्तवादानङ्गीकारे दोषमाह ॥ तत्त्वत इति ॥ तत्त्वतो भिद्यमाने ह्यमृतमजमद्वयं स्वभावतः सन्मर्त्यतां व्रजेद्यथाऽग्निः शीतताम् । तच्चानिष्टं स्वभाववैपरीत्यगमनम् । सर्वप्रमाणविरोधात् । तस्मान्न परमार्थसद् द्वैतमित्यर्थः ॥ १९ ॥

स्वपक्षमुक्त्वा स्वयूथ्यपक्षमनुभाष्य दूषयति—

**अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः ॥**
**अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति ॥ २० ॥**

अजातस्येति ॥ ये तु पुनः केचिदुपनिषद्व्याख्यातारो ब्रह्मवादिनो वावदूकाः, अजातस्यैवात्मतत्त्वस्याऽमृतस्य स्वभावतो जातिमुत्पत्तिमिच्छन्ति, परमार्थत एव तेषां जातं चेत्तदेव मर्त्यतामेष्यत्यवश्यम् । स चाऽजातो ह्यमृतो भावः स्वभावतः सन्नात्मा कथं मर्त्यतामेष्यति, न कथञ्चन मर्त्यत्वं स्वभाववैपरीत्यमेष्यतीत्यर्थः ॥ २० ॥

पदार्थानां स्वभाववैपरीत्यगमनमनुपपन्नमित्युक्तं प्रपञ्चयति—

**न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ॥**
**प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ॥ २१ ॥**

न भवतीति ॥ यस्मान्न भवत्यमृतं मर्त्यं लोके, नापि मर्त्यमऽमृतम् । तथा ततः प्रकृतेः स्वभावस्यान्यथाभावः स्वतः प्रच्युतिर्न कथञ्चिद् भविष्यति । अग्नेरिवौष्ण्यस्य स्वरूपनाशप्रसङ्गादित्यर्थः ॥२१॥

ननु ब्रह्म कारणरूपेण प्रागुत्पत्तेरमृतमपि कार्याकारेणोत्पत्त्युत्तरकालं मर्त्यतां गमिष्यति, ततो रूपभेदादुभयमविरुद्धमिति, तत्राह—

**स्वभावेनामृतो यस्य भावो गच्छति मर्त्यताम् ॥**
**कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥ २२ ॥**

स्वभावेनेति ॥ यस्य पुनर्वादिनः स्वभावेनामृतो भावो मर्त्यतां गच्छति परमार्थतो जायते तस्य प्रागुत्पत्तेः स भावः स्वभावतोऽमृत इति प्रतिज्ञा मृषैव । कारणस्यैव कार्याकारेण जन्मयोग्यतया मर्त्यत्वावगमादित्यर्थः । कृतकेनामृतः कथं स्थास्यति निश्चलः, अमृतस्वभावतया न कथञ्चित् स्थास्यति । आत्मजातिवादिनः सर्वदा अजं नाम नास्त्येव । सर्वमेतन्मर्त्यं कार्यमात्रं वस्त्वित्यजं ब्रह्मास्मीति

ज्ञानाभावादनिर्मोक्षप्रसङ्गोऽपीति दोषान्तरमाह ॥ कृतकेनेति ॥ २२ ॥

परिणामवादस्य सृष्टिश्रुत्यनुसारेण स्वीकार्यत्वमाशङ्क्य निरस्यति

भूततोऽभूततो वाऽपि सृज्यमाने समा श्रुतिः ॥
निश्चितं युक्तियुक्तं च यत्तद्भवति नेतरत् ॥ २३ ॥

भूतत इति ॥ भूततः परमार्थतः सृज्यमाने वस्तुनि अभूतः मायया वा मायाविनेव सृज्यमाने वस्तुनि समा तुल्या सृष्टिश्रुतिरित्यर्थः । सृष्टिश्रुतेरद्वैतानुगुण्येन प्रमाणयुक्त्यनुगृहीतमेवाभ्युपगन्तव्यमिति फलितमाह ॥ निश्चितमिति ॥ यस्माच्छ्रुत्या निश्चितं यदेकमेवाद्वितीयमजममृतमिति युक्तियुक्तं च युक्त्या च सम्पन्नं तदेव श्रुत्यर्थो भवति, नेतरत् परिणामिद्वैतं कदाचिदपि। तस्मान्न परिणामवादः स्वीकार्य इत्यर्थः ॥ २३ ॥

कथं श्रुतिनिश्चय इत्याह—

नेह नानेति चाऽऽम्नायादिन्द्रो मायाभिरित्यपि ॥
अजायमानो बहुधा मायया जायते तु सः ॥ २४ ॥

नेहेति॥यदि हि भूतत एव सृष्टिः स्यात्ततः सत्यमेव नानावस्त्विति तदभावप्रदर्शनार्थमाम्नायो न स्यात् । अस्ति च, नेह नानाऽस्ति किञ्चनेत्यादिराम्नायो द्वैतभावप्रतिषेधार्थः । तस्मादात्मैकत्वप्रतिपत्त्यर्था कल्पिता सृष्टिरभूतैव । प्राणसंवादवत् । इन्द्रो मायाभिरित्यप्यभूतार्थप्रतिपादकेन मायाशब्देन व्यपदेशादसौ कल्पितेत्यर्थः । मायामयी सृष्टिरित्यत्र हेत्वन्तरमाह ॥ अजायमान इति ॥ न ह्यजायमानत्वं बहुधा जन्म चैकत्र सम्भवति । अग्नाविव शैत्यमौष्ण्यं च । तस्मान्माययैव जायते सः । तुरवधारणार्थः । तत्र को मोह इति फलवत्वादेकत्वदर्शनमेव श्रुतिनिश्चितोऽर्थ इति भावः ॥ २४ ॥

भेददृष्टेर्मिथ्यात्वे हेत्वन्तरमाह—

संभूतेरपवादाच्च संभवः प्रतिषिद्ध्यते ॥
को न्वेनं जनयेदिति कारणं प्रतिषिद्ध्यते ॥ २५ ॥

सम्भूतेरिति॥सम्यग्भूतिरैश्वर्यं यस्या साः सम्भूतिर्देवता हिरण्यगर्भाख्या । तस्याश्च कार्यमध्ये श्रेष्ठायाः, अन्धन्तमः प्रविशन्ति ये सम्भूतिमुपासते इत्यत्र निन्दितत्वात् प्रधानमल्लनिबर्हणन्यायेन स-

म्भवशङ्कितं कार्यमात्रमेव निषिध्यते। तथाच सिद्धं तस्याऽवस्तुत्वमित्यर्थः। कारणप्रतिषेधेन तदवस्तुत्वसिद्धेश्च भेददृष्टिर्मिथ्येत्याह॥ को न्वेनमिति॥ एवं मायानिर्मितस्यैव जीवस्याविद्यया प्रत्युपस्थापितस्याविद्यानाशे स्वभावरूपत्वात् परमार्थतः को न्वेनं जीवं जनयेत्। न हि रज्ज्वामविद्यारोपितं सर्पं पुनर्विवेकतो नष्टं जनयेत् कश्चित् तथा न कश्चिदेनं जनयेदिति को न्वित्याक्षेपार्थत्वात् कारणं प्रतिषिध्यते। नायं कुतश्चिन्न बभूव कश्चिदिति श्रुतेरित्यर्थः॥ २५॥

इतोऽपि द्वैतं वस्तु न भवतीत्याह—

स एष नेति नेतीति व्याख्यातं निन्हुते यतः॥
सर्वमग्राह्यभावेन हेतुनाऽजं प्रकाशते॥ २६॥

स एष इति॥ द्वे वा वेत्यादिना व्याख्यातं मूर्तामूर्तादिसर्वमेव ग्राह्यं नेति नेतीति वीप्सया यतो निषेधति श्रुतिरतः स एष इत्युपक्रम्य प्रतिपादितं सबाह्यान्तरमजमात्मतत्त्वमविषयत्वेन हेतुना कारणेन प्रकाशते प्रथते स्वयमेवेत्यर्थः॥ २६॥

आत्मतत्त्वमजमद्वितीयं परमार्थभूतं, द्वैतं तु मायाकल्पितमसदिति प्रतिपादितम्। तत्रैव हेत्वन्तरमाह—

सतो हि मायया जन्म युज्यते न तु तत्त्वतः॥
तत्त्वतो जायते यस्य जातं तस्य हि जायते॥ २७॥

सतो हीति॥ यदात्मतत्त्वं सदा सदेकरूपं, तस्य मायया जगदाकारेण जन्म युक्तम्। मायाया दुर्निरूपार्थसमर्थनपटीयस्त्वात् परमार्थतस्त्वेकरूपमनेकरूपतया नोत्पत्तुं पारयाति। विरोधादित्यर्थः। विपक्षे दोषमाह॥ तत्त्वत इति॥ यस्य वादिनो मते ब्रह्मैव परमार्थतो जगदात्मना जायते तस्याजस्य जायमानत्वप्रतिज्ञाया व्याहतत्त्वाज्जातस्यैव जायमानत्वे स्यादनवस्थेत्यर्थः॥ २७॥

सत्पूर्वकं कार्यमिति न व्याप्तिः। असद्वादिभिरसतोऽभावात् सज्जन्माभ्युपगमादित्याशङ्क्याह—

असतो मायया जन्म तत्त्वतो नैव युज्यते॥
वन्ध्यापुत्रो न तत्त्वेन मायया वाऽपि जायते॥ २८॥

असत इति॥ असतो निःस्वरूपस्य स्वरूपाभावादेव तत्त्वतो-

ऽतत्त्वतो वा न कार्याकारेण युक्तं जन्मेत्यर्थः । तत्र दृष्टान्तमाह ॥ बन्ध्येति ॥ न हि बन्ध्यापुत्रो मायया तत्त्वतो वा जायते। अदृष्टत्वात्। तस्मात् सद्वादो मायया सम्भवत्यऽसद्वादस्तु तयाऽपि नेति दूरत एवानुपपन्न इत्यर्थः ॥ २८ ॥

सतत्त्वस्यैव मायया जन्मेत्युक्तमयुक्तम् । अवस्थाद्वयेऽपि द्वैतस्य मनःस्पन्दितत्वस्वीकारादित्याशङ्क्योक्तमुपपादयति–

**यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः ॥**
**तथा जाग्रद्द्वयाभासं स्पन्दते मायया मनः ॥ २९ ॥**

यथेति ॥ यथा रज्ज्वां विकल्पितः सर्पो रज्जुरूपेणावेक्ष्यमाणः सन्नेवं मनःपरमार्थविज्ञप्त्याऽऽत्मरूपेणावेक्ष्यमाणं सद् ग्राह्यग्राहकरूपेण द्वयाभासं स्पन्दते। स्वप्ने मायया रज्ज्वामिव सर्पः। तथा तद्वदेव जाग्रज्जागरिते मायया द्वयाकारेण मनः स्पन्दत इवेत्यर्थः॥ २९ ॥

मनो ब्रह्म चेति कारणद्वयं तर्हि द्वैतस्य स्वीकृतमित्यभिप्रायमप्रतिपत्त्याशङ्क्य दृष्टान्तेन निराचष्टे–

**अद्वयं च द्वयाभासं मनः स्वप्ने न संशयः ॥**
**अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः ॥ ३० ॥**

अद्वयमिति ॥ रज्जुरूपेण सर्प इव परमार्थत आत्मरूपेणाद्वयं सद् द्वयाभासं मनः स्वप्ने न संशयः। न हि स्वप्ने हस्त्यादिग्राह्यं तद्ग्राहकं वा चक्षुरादिद्वयं चैतन्यव्यतिरेकेणास्ति । तथैव जागरितेऽपि परमाऽर्थात्मस्वरूपेणाद्वयं सन्मनोग्राह्यग्राहकद्वैताकारेणावभासते। तथाच परमार्थसतो विज्ञानमात्रस्यावस्थाद्वयेऽपि विशेषाभावात् तस्मिन्नेवाऽधिष्ठाने मायया कल्पितंमनः स्पन्दते द्वयाकारमित्यङ्गीकारान्न कारणद्वयं शङ्कितव्यमिति भावः॥ ३० ॥

मनोमात्रं द्वैतमित्युक्तम्। तत्रान्वयव्यतिरेकलक्षणमनुमानमाह–

**मनोदृश्यमिदं द्वैतं यत्किञ्चित् सचराचरम् ॥**
**मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥ ३१ ॥**

मन इति ॥ तेन हि मनसा विकल्पमानेन दृश्यं मनोदृश्यमिदं द्वैतं सर्वं मन एवेति भवितुमर्हति । तद्भावे भावात् तदभावेऽभावात्। मनसो ह्यमनीभावे निरुद्धे विवेकदर्शनाभ्यासवैराग्याभ्यां रज्ज्वामिव

सर्पे लयं गते वा सुषुप्ते द्वैतं नैवोपलभ्यत इति सिद्धं द्वैतस्यासत्त्वमित्यर्थः ॥ ३१ ॥

मनसो यदमनस्त्वमुक्तं तदुपपादयति–

आत्मसत्यानुबोधेन न संकल्पयते यदा ॥
अमनस्तां तदा याति ग्राह्याभावे तदग्रहम् ॥ ३२ ॥

आत्मेति ॥ आत्मैव सत्यमात्मसत्यम् । तस्य शास्त्राचार्योपदेशमनु ब्रह्मैवेदं सर्वमहं चेत्यवबोध आत्मसत्यानुबोधः । तेन सङ्कल्प्याभावतया यदा यस्मिन् काले न सङ्कल्पयते, दाह्याभावे ज्वलनमिवाऽग्नेस्तदा तस्मिन् काले अमनस्ताममनोभावं याति । ग्राह्याभावे तन्मनः अग्रहं ग्रहणविकल्पनावर्जितं भवति । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यात्मज्ञाने पृथक्त्वाभावादित्यर्थः ॥ ३२ ॥

मनश्चेन्मनस्त्वं व्यावर्तते तर्हि व्यञ्जकाभावान्नावबोधः सम्भवति । मनसैवानुद्रष्टव्यमिति श्रुतेर्मनसश्चासत्त्वाङ्गीकारादित्याशङ्क्य स्वरूपभूतेन ज्ञानेनैवात्मनोऽवबोधसम्भवान्नातिरिक्ते मनस्यपेक्षेत्याह–

अकल्पकमजं ज्ञानं ज्ञेयाभिन्नं प्रचक्षते ॥
ब्रह्मज्ञेयमजं नित्यमजेनाजं विबुद्ध्यते ॥ ३३ ॥

अकल्पकमिति ॥ अकल्पकं सर्वकल्पनावर्जितमत एवाजं ज्ञानं ज्ञप्तिमात्रं ज्ञेयेन परमार्थसता ब्रह्मणा भिन्नं प्रचक्षते कथयन्ति ब्रह्मविदः । न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते इति श्रुतेस्तस्यैव विशेषणं, ब्रह्म ज्ञेयं यस्य स्वस्य ज्ञानस्य तदिदं ब्रह्मज्ञेयम् । औष्ण्यस्येवाऽग्निवदभिन्नं तेनात्मरूपेणाजेन ज्ञानेनाजं ज्ञेयमात्मनस्तत्त्वं स्वयमेव विबुद्ध्यते अवगच्छति नित्यप्रकाशरूप इव सविता नित्यविज्ञानैकरसघनत्वान्न ज्ञानान्तरमपेक्षते इत्यर्थः ॥ ३३ ॥

मोक्ष्यमाणस्य ज्ञानफलं स्वर्गवन्न परोक्षं, किन्तु तृप्तिवत् प्रत्यक्षम् । अतश्च प्रकृतज्ञानफलस्य प्रत्यक्षत्वार्थं प्रसङ्गं प्रकरोति–

निगृहीतस्य मनसो निर्विकल्पस्य धीमतः ॥
प्रचारः स तु विज्ञेयः सुषुप्तेऽन्यो न तत्समः ॥ ३४ ॥

निगृहीतस्येति ॥ निगृहीतस्य निरुद्धस्य मनसो निर्विकल्पस्य सर्वकल्पनावर्जितस्य धीमतो विवेकवतः प्रचरणमात्मन्येव पर्यवसानं

प्रचारो यः स तु प्रचार आत्मनि पर्यवसानात्मको विशेषेण ज्ञेयो योगिभिरात्मज्ञैरित्यर्थः। ननु सर्वप्रत्ययाभावे यादृशः सुषुप्तस्थस्य मनसः प्रचारस्तादृश एव निरुद्धस्यापि प्रत्ययाभावाविशेषात्, किं तत्र विज्ञेयमिति चेन्नेत्याह ॥ सुषुप्ते इति ॥ यस्मात् सुषुप्तेऽन्यः प्रचारोऽविद्यामोहतमोग्रस्तस्यान्तर्लीनानेकानर्थप्रवृत्तिबीजवासनावतो मनस आत्मसत्यानुबोधहुताशविप्लुष्टाविद्याद्यनर्थप्रवृत्तिबीजस्यान्य एव प्रशान्तसर्वक्लेशरजसः स्वतन्त्रप्रचारः। अतो न तत्समः। तस्माद्युक्तः विज्ञातुमित्यभिप्रायः॥ ३४॥

मनसः सुषुप्तस्य समाहितस्य च प्रचारभेदोऽस्तीत्युक्तम्। तत्र हेतुमाह—

**लीयते हि सुषुप्ते तन्निगृहीतं न लीयते ॥**
**तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः ॥ ३५ ॥**

लीयत इति ॥ लीयते हि यस्मात् सर्वाभिरविद्यादिप्रत्ययबीजवासनाभिः सह तमोरूपम् अविशेषरूपं बीजभावमापद्यते। तद्विवेकविज्ञानपूर्वकं निरुद्धं निगृहीतं सन्न लीयते तमोबीजभावं नापद्यते। तस्माद्युक्तः प्रचारभेदः सुषुप्तस्य समाहितस्य मनस इत्यर्थः। समाहितस्य मनसो द्वैतवर्जितस्य स्वरूपं कथयति ॥ तदेवेति ॥ यदा ग्राह्यग्राहकाविद्याकृतमलद्वयवर्जितं तदा परमद्वयं ब्रह्मैव तत्संवृतमित्यतस्तदेव निर्भयं शान्तमभयं ब्रह्म ज्ञप्तिर्ज्ञानमात्मस्वभावचैतन्यं तदेव ज्ञानमालोकः प्रकाशो यस्य तद् ब्रह्म ज्ञानालोकं विज्ञानैकरसघनं समन्ततः समन्तात् सर्वतो नैरन्तर्येण व्योमवद् व्यापकमित्यर्थः॥ ३५॥

प्रकृतमेव ब्रह्म प्रकारान्तरेण निरूपयति—

**अजमनिद्रमस्वप्नमनामकमरूपकम् ॥**
**सकृद्विभातं सर्वज्ञं नोपचारः कथञ्चन ॥ ३६ ॥**

अजमित्यादिना ॥ जन्मनिमित्ताभावात् सबाह्याभ्यान्तरमजम्, अत एवानिद्रम् अविद्यालक्षणानादिमायानिद्रास्वापात् प्रबुद्धोऽद्वयस्वरूपेणात्मना। अतोऽस्वप्नमन्यथाग्रहवर्जितमविद्याकृते नामरूपे यस्य नस्तस्तद् ब्रह्माऽनामकमरूपकम्। यतो वाचो निवर्तन्त इत्यादिश्रुतेः। सकृद्विभातं सदैव विभातं भारूपमत एव सर्वं च तज्ज्ञस्वरूपं चेति सर्वज्ञमित्यर्थः। विदुषो निरुद्धमनसो ब्रह्मस्वरूपावस्थानमु-

कम् । ये तु विदुषोऽपि समाध्यादि कर्तव्यमाचक्षते तान् प्रत्याह ॥ नेति ॥ नेह ब्रह्मण्येवंविधे उपचरणमुपचारः कर्तव्यसंभवः । कथञ्चिदपि नित्यशुद्धमुक्तस्वभावत्वाद् ब्रह्मण इत्यर्थः ॥ ३६ ॥

विद्वानेव ब्रह्मेत्यङ्गीकृत्य प्रकृतं ब्रह्म पुँल्लिङ्गत्वेन निर्दिशति—

**सर्वाभिलापविगतः सर्वचिन्तासमुत्थितः ॥**
**सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभयः ॥ ३७ ॥**

सर्वेति ॥ अभिलप्यतेऽनेनेत्यभिलापः करणम् । तस्माद्विगतः सर्वबाह्यकरणवर्जितः । तथा, सर्वचिन्तासमुत्थितः ॥ चिन्त्यतेऽनयेति चिन्ता बुद्धिः । तस्याः समुत्थितः । अन्तःकरणवर्जितः । अप्राणो ह्यमनाः शुभ्र इति श्रुतेः । यस्मात् सर्वान्तर्बाह्यविशेषवर्जितः । अतः सुप्रशान्तः सकृज्ज्योतिः सदैव ज्योतिरात्मा चैतन्यस्वरूपेण । अत एव, समाधिः ॥ समाधिनिमित्तप्रज्ञावगम्यत्वात् समाधीयतेऽस्मिन्निति वा समाधिः ॥ अचलः अविक्रियः । अत एवाभयो विक्रियाभावादित्यर्थः ॥ ३७ ॥

प्रकृते ब्रह्मण्यविक्रिये विधिनिषेधाधीनयोर्वैदिकयोर्वा लौकिकयोर्वा हानोपादानयोरनवकाशत्वमित्याह—

**ग्रहो न तत्र नोत्सर्गश्चिन्ता यत्र न विद्यते ॥**
**आत्मसंस्थं तदा ज्ञानमजाति समतां गतम् ॥ ३८ ॥**

ग्रहो नेति ॥ यस्माद् ब्रह्मैव समाधिरचलः, अभय इत्युक्तम् । अतो न तत्र तस्मिन् ब्रह्मणि ग्रहो ग्रहणम् उपादानं, नोत्सर्ग उत्सर्जनं हानं वा विद्यते । विकारहेतोन्यस्याभावान्निरवयवत्वाच्चेत्यर्थः । चिन्ता यत्र न विद्यते सर्वप्रकारैव चिन्ता न संभवति । मनोऽविषयत्वात् । कुतस्तत्र हानोपादाने !! इत्याह ॥ चिन्तेति॥ ब्रह्मणि ज्ञाते फलितमाह ॥ आत्मेति ॥ यदैवात्मसत्यानुबोधो जातस्तदैवात्मसंस्थं विषयाभावादग्न्युष्णत्ववदात्मन्येव स्थितं ज्ञानमित्यर्थः । प्रकरणादौ प्रतिज्ञातमुपसंहरति ॥ अजातीति ॥ जातिवर्जितं समतां गतं परं साम्यमापन्नं भवति । यदादौ प्रतिज्ञातम्, अतो वक्ष्याम्यकार्पण्यमजाति समतां गतमिति ॥ इदं तदुपपत्तितः शास्त्रतश्चोक्तमुपसंहृतमित्यर्थः ॥ ३८ ॥

परमार्थब्रह्मस्वरूपावस्थानफलकं चेदद्वैतदर्शनं किमिति तर्हि सर्वै-

रेव नाद्रियते, तत्राह-

**अस्पर्शयोगो वै नाम दुर्दर्शः सर्वयोगिभिः ॥**
**योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥ ३९ ॥**

अस्पर्शेति ॥ सर्वसंबन्धाख्यस्पर्शवर्जितत्वादस्पर्शः । स एव योगो जीवस्य ब्रह्मभावेन योजनाद् नाम वै स्मर्यते प्रसिद्ध उपनिषत्सु, न लिप्यते कर्मणा पापकेनेत्याद्यासु । दुःखेन दृश्यत इति दुर्दर्शः सर्वैर्योगिभिः ॥ वेदान्तविहितविज्ञानरहितैः सर्वयोगिभिरित्यर्थः ॥ परमार्थतत्त्वं कर्मनिष्ठानां बहिर्मुखानां दुर्दर्शनमित्यत्र हेतुमाह ॥ योगिन इति ॥ कर्मिणो हि श्रोत्रिया ब्राह्मण्याद्यस्माकं नङ्क्ष्यतीति मत्वाऽस्मात्तत्त्वज्ञानाद् बिभ्यति भयं कुर्वन्ति । अभयेऽस्मिन् भयदर्शिनः ॥ भयनिमित्तात्मनाशदर्शनशीला अविवेकिन इत्यर्थः ॥ ३९ ॥

उत्तमदृष्टीनामद्वैतदर्शनमद्वैतदृष्टिफलं च मनोनिरोधमुक्त्वा मन्ददृष्टीनां मनोनिरोधाधीनमात्मदर्शनमुपपादयति-

**मनसो निग्रहायत्तमभयं सर्वयोगिनाम् ॥**
**दुःखक्षयः प्रबोधश्चाप्यऽक्षया शान्तिरेव च ॥ ४० ॥**

मनस इति ॥ सर्वेषां योगिनां कर्मानुष्ठाननिष्ठानां बुद्धिशुद्धिमतामभयमशेषभयनिवृत्तिसाधनमात्मदर्शनं मनोनिरोधाधीनं भवतीत्यऽर्थः । मनोनिरोधाधीनं प्रागुक्तमनूद्य तत्फलं कैवल्यं कथयति ॥ दुःखेति ॥ दुःखक्षयोऽपि आत्मप्रबोधश्च मनोनिग्रहायत्त एव । तथा अक्षयाऽपि मोक्षाख्या शान्तिस्तेषां मनोनिग्रहायत्तैवेत्यर्थः ॥ ४० ॥

कथं मुमुक्षूणां जिज्ञासूनां मनोनिग्रहः सिद्ध्येदित्याशङ्क्याह—

**उत्सेक उदधेर्यद्वत् कुशाग्रेणैकबिन्दुना ॥**
**मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥ ४१ ॥**

उत्सेक इति ॥ मनोनिग्रहोऽपि तेषामुदधेः कुशाग्रेणैकबिन्दुना उत्सेचनेन शोषणव्यवसायवद् व्यवसायवतां संयतान्तःकरणानामऽनिर्वेदाद् ब्रह्म नास्तीत्युद्वेगवर्जनादपरिखेदतोऽनायासेन भवतीत्यर्थः ॥ ४१ ॥

समाधिं कुर्वतस्तत्त्वसाक्षात्कारप्रतिबन्धका लयविक्षेपसुखरागा-

स्तेभ्यो मनसो वक्ष्यमाणोपायेन निग्रहं कुर्यात् । अन्यथा समाधिसाफल्यानुपपत्तेरित्याह—

उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः ॥
सुप्रसन्नं लये चैव यथा कामो लयस्तथा ॥ ४२ ॥

उपायेनेति ॥ अपरिखिन्नव्यवसायवान् स वक्ष्यमाणेनोपायेन कामभोगविषयेषु विक्षिप्तं मनो निगृह्णीयान्निरुन्ध्यादात्मन्येव । लीयतेऽस्मिन् स्थानद्वयमिति सुषुप्तो लयः । तस्मिन् लये च सुप्रसन्नमायासवर्जितमपि निगृह्णीयादित्यर्थः । लये सुप्रसन्नं चेत् कस्मान्निगृह्यत इत्याशङ्क्याह ॥ यथेति ॥ यस्माद्यथा कामोऽनर्थहेतुस्तथा लयोऽप्यतः कामविषयस्य मनसो निग्रहवल्लयादपि निरोद्धव्यमित्यर्थः ॥ ४२ ॥

उपायेन निगृह्णीयादित्युक्तम् । तमेवोपायं वैराग्यरूपमुपदिशति—

दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् ॥
अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥ ४३ ॥

दुःखमिति ॥ सर्वद्वैतमविद्याविजृम्भितं दुःखमेवेत्यनुस्मृत्य कामभोगात् कामनिमित्तो भोग इच्छाविषयस्तस्माद्विप्रसृतं मनो निवर्तयेद् वैराग्यभावनयेत्यर्थः । ज्ञानाभ्यासाख्यमुपायान्तरमुपन्यस्यति ॥ अजमिति ॥ अजं ब्रह्म सर्वमित्येतच्छास्त्राचार्योपदेशतोऽनुस्मृत्य तद्विपरीतं द्वैतजातं नैव तु पश्यति अभावात् ॥ ४३ ॥

ज्ञानाभ्यासवैराग्याभ्यां लयाद्विक्षेपाच्च व्यावर्तितं मनो रागप्रतिबद्धं श्रवणाद्यभ्यासप्रसूतसंप्रज्ञातसमाधिनाऽसंप्रज्ञातसमाधिपर्यन्तेन ततोऽपि प्रतिबन्धाद् व्यावर्तनीयमित्याह—

लये संबोधयेच्चित्तं विक्षिप्तं शमयेत् पुनः ॥
सकषायं विजानीयात् समप्राप्तं न चालयेत् ॥ ४४ ॥

लय इति ॥ एवमनेन श्रवणाद्यभ्यासवैराग्यद्वयोपायेन लये सुषुप्ते लीनं चित्तं मनः संबोधयेद् आत्मविवेकदर्शनेन योजयेत् । विक्षिप्तं च कामभोगेषु विप्रसृतं शमयेद् व्यावर्तयेत् ॥ पुनः, एवं पुनः पुनरभ्यासतो लयात् संबोधितं विषयेभ्यश्च व्यावर्तितं ब्रह्मभावं चानापन्नमन्तरालावस्थं सकषायं सरागं बीजसंयुक्तं मन इति विजानीयात् । ततोऽपि यत्नतः साम्यमापादयेत् । यदा तु समप्राप्तं सम-

प्राप्त्यभिमुखीभवति तदनन्तरं न विचालयेद् विषयाभिमुखं न कुर्या-दित्यर्थः ॥ ४४ ॥

तत्र समाध्यवस्थायां समाधित्सतो योगिनो यत्सुखं जायते त-न्नास्वादयेत् तत्र नानुरज्येत । तद्विषयाभिलाषादपि मनो निरोद्धव्य-मित्याह—

नाऽऽस्वादयेत् सुखं तत्र निःसङ्गः प्रज्ञया भवेत् ॥
निश्चलं निश्चरच्चित्तमेकीकुर्यात् प्रयत्नतः ॥ ४५ ॥

नास्वादयेदिति ॥ किन्तु तस्यामवस्थायां सुखं यदुपलभ्यते तद-ज्ञानविजृम्भितं मिथ्यैवेति प्रज्ञया विवेकविज्ञानेन निःस्पृहो यथोक्ते सुखेऽनुरागरहितः सन् भावयेदित्याह ॥ निःसङ्ग इति ॥ किञ्च य-च्चित्तं प्राचीनवैराग्याद्युपायेन निश्चलं प्रत्यगात्मप्रवणं प्रसाधितं तद्य-दि निश्चरत्स्वभावानुसारेण बहिर्निर्गन्तुमिच्छेत्तदा संप्रज्ञातसमाधे-रसंप्रज्ञातसमाधिपर्यन्तात् प्रयत्नात्तदात्मन्येवैकीकृत्य तन्मात्रमापाद्य परिशुद्धपरिपूर्णब्रह्मात्मकोऽहमिति तिष्ठेदित्याह ॥ निश्चरदिति ॥ ४५ ॥

कदा पुनरिदं चित्तं ब्रह्ममात्रमापद्यते तत्राह—

यदा न लीयते चित्तं न च विक्षिप्यते पुनः ॥
अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥ ४६ ॥

यदेति ॥ यथोक्तेनोपायेन निगृहीतं सुषुप्तौ न लीयते, न च पुन-र्विषयेषु विक्षिप्यते ॥ अनिङ्गनमचलं निर्वातप्रदीपकल्पमनाभासं, न केनचित् कल्पितेन विषयभावेनावभासते, किन्तु ब्रह्माकारेणेत्थं-वँल्लक्षणं चित्तं यदा संपद्यते तदा निष्पन्नं ब्रह्मस्वरूपेण चित्तं भवती-त्यर्थः ॥ ४६ ॥

असंप्रज्ञातसमाध्यवस्थायां येन रूपेण चित्तमभिनिष्पद्यते तद् ब्रह्मस्वरूपं विशिनष्टि—

स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम् ॥
अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते ॥ ४७ ॥

स्वस्थमिति ॥ यथोक्तं परमार्थसुखमात्मसत्यानुबोधलक्षणं स्व-स्थं स्वात्मनि स्थितं शान्तं सर्वानर्थोपशमरूपं सनिर्वाणं निर्वृत्ति-

निर्वाणं कैवल्यं सह निर्वाणेन वर्तते। तच्चाकथ्यं न शक्यते कथयितुम्। क्षीरगुडादिमाधुर्यभेदस्येव मूकस्य तस्य स्वानुभवमात्राधिगम्यत्वात्। सुखमुत्तमं निरतिशयं हि तद् योगिप्रत्यक्षमेव। न जातमित्यजम्। यथा विषयविषयम्। अजेनानुत्पन्नेन ज्ञेयेन ब्रह्मणाऽव्यतिरिक्तं सत् स्वेन सर्वज्ञरूपेण सर्वज्ञं ब्रह्मैव सुखं परिचक्षते कथयन्ति ब्रह्मविद इत्यर्थः ॥ ४७ ॥

उक्तानामुपायानां परमार्थसत्यत्वे सत्याद्वैतहानिरन्यथा तदप्रमितिरित्याशङ्क्याह–

न कश्चिज्जायते जीवः संभवोऽस्य न विद्यते ॥
एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते ॥ ४८ ॥

इति श्रीगौडपादीयकारिकासु अद्वैताख्यं तृतीयं प्रकरणम् ॥ ३ ॥ ॐ तत्सत् ॥

न कश्चिदिति ॥ सर्वोऽप्ययं मनोनिग्रहादिर्मृल्लोहादिवत् सृष्टिरुपासना चोक्ता परमार्थस्वरूपप्रतिपत्त्युपायत्वेन, न तु परमार्थसत्येति। परमार्थसत्यं तु नकश्चिज्जायते जीवःकर्ताभोक्ता नोत्पद्यते केनचिदपि प्रकारेण अतः स्वभावतोऽजस्यात्मनः संभवः कारणं न विद्यते। नाऽस्ति यस्मादस्य कारणं तस्मान्न कश्चिज्जायते जीव इत्येतत् पूर्वेषु ग्रन्थेषु उपायत्वेनोक्तानां प्रातीतिकसत्यानामेतदुत्तमं सत्यम्। यत्र यस्मिन् सत्यस्वरूपे ब्रह्मण्यणुमात्रमपि किञ्चिन्न जायते। तदेतदुत्तमं सत्यमित्यर्थः ॥ ४८ ॥

इति श्रीगौडपादीयवार्तिकवृत्तौ अद्वैताख्यं तृतीयं प्रकरणम् ॥ ३ ॥

## अथ अलातशान्त्याख्यं प्रकरणं चतुर्थम् ॥ ४ ॥

ॐकारनिर्णयद्वारेणाऽऽगमतः प्रतिज्ञातस्याद्वैतस्य बाह्यविषयभेद-वैतथ्याच्च सिद्धस्य पुनस्तृतीये शास्त्रयुक्तिभ्यां साक्षान्निर्द्धारितस्यैतत्तदुत्तमं सत्यमित्युपसंहारः कृतोऽतस्तस्यैतस्यागमार्थस्याद्वैतदर्शनस्य प्रतिपक्षभूता द्वैतिनो वैनाशिकाश्च । तेषां चान्योन्यविरोधाद् रागद्वेषादिक्लेशास्पदं दर्शनमिति मिथ्यादर्शनत्वं सूचितम् । क्लेशानास्पदत्वादात्मैकत्वबुद्धिरेव सम्यग्दर्शनमित्यद्वैतदर्शनस्तुतये । तदिह विस्तरेणान्योन्यविरुद्धतया असम्यग्दर्शनत्वं प्रदर्श्य तत्प्रतिषेधेनाऽद्वैतदर्शनसिद्धिरुपसंहर्तव्या व्यतिरेकेण– यन्नानित्यं न तत्कृतकमित्येवंरूपेणेत्यलातशान्तिरारभ्यते । तत्राद्यन्तमध्यमङ्गला ग्रन्थाः प्रचारिणो भवन्तीत्यभिप्रेत्याद्ये चोङ्कारोच्चारणवदन्ते परदेवताप्रणामवन्मध्येऽपि परदेवतारूपमुद्देष्टारं प्रणमति–

**ॐम् ॥ ज्ञानेनाऽऽकाशकल्पेन धर्मान् यो गगनोपमान् ॥**<br>**ज्ञेयाभिन्नेन संबुद्धस्तं वन्दे द्विपदां वरम् ॥ १ ॥**

ज्ञानेनेति ॥ आकाशेन ईषदसमाप्तमाकाशकल्पमाकाशतुल्यम् । तेनाकाशकल्पेन ज्ञानेन ज्ञेयैर्धर्मैरात्मभिरभिन्नमग्न्यौष्ण्यवत् सवितृप्रकाशवच्च ज्ञानं, तेन ज्ञेयाभिन्नेन धर्मान् आत्मनो गगनोपमान् गगनमुपमा येषां ते गगनोपमास्तानात्मनो धर्मान् यः सम्बुद्धवानित्ययमेव ईश्वरो नारायणाख्यः । तं वन्दे अभिवादये । द्विपदां वरं, द्विपदोपलक्षितानां पुरुषाणां वरं प्रधानं पुरुषोत्तममित्यभिप्रायः । तदेवमुपदेष्टृनमस्कारमुखेन ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वदर्शनमिह प्रकरणे प्रतिपादयिषितं प्रतिपक्षप्रतिषेधद्वारेण प्रतिज्ञातं भवतीति फलितम् ॥ १ ॥

इदानीमद्वैतदर्शनयोगस्तुतये तं नमस्कारं प्रस्तौति मुमुक्षूणां तत्साधनेषु प्रवृत्त्यर्थमित्याह–

**अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः ॥**<br>**अविवादोऽविरुद्धश्च देशितस्तं नमाम्यम् ॥ २ ॥**

अस्पर्शेति ॥ स्पर्शनं सम्बन्धो न विद्यते यस्य योगस्य केनचित्

कदाचिदपि सोऽस्पर्शयोगो ब्रह्मस्वभाव एव वै नामेति ब्रह्मविदामस्पर्शयोग इत्येवं प्रसिद्धः। स च सर्वेषां सत्त्वानां देहभृतां सुखयतीति सर्वसत्त्वसुखो भवति। कश्चिदत्यन्तसुखसाधनविशिष्टोऽपि दुःखरूपः। यथा तपः। अयं तु न तथा। किन्तु सर्वसत्त्वानां सुखः। तथेह भवति कश्चिद्विषयोपभोगः सुखो, न हितः। अयं तु सुखो हितश्च नित्यमप्रचलितस्वभावत्वात्। किञ्चाऽविवादः। विरुद्धवदनं विवादः पक्षप्रतिपक्षपरिग्रहेण यस्मिन्न विद्यते सोऽविवादः। कस्माद् यतोऽविरुद्धश्च॥ न हि कस्यचिदात्मप्रकाशो विरुद्धः। य ईदृशो योगो देशित उपदिष्टः शास्त्रेण, तं नमाम्यहं प्रणमामीत्यर्थः॥ २॥

अद्वैतदर्शनस्याविरुद्धत्वेनाविवादत्वं विशदीकर्तुं द्वैतिनां विवादं तावदुदाहरति—

भूतस्य जातिमिच्छन्ति वादिनः केचिदेव हि॥
अभूतस्यापरे धीरा विवदन्तः परस्परम्॥ ३॥

भूतस्येति॥ भूतस्य विद्यमानस्य वस्तुनो जातिमुत्पत्तिमिच्छन्ति वादिनः केचिदेव हि सांख्याः, न सर्व एव द्वैतिनः। यस्मादभूतस्याऽविद्यमानस्यापरे वैशेषिका नैयायिकाश्च धीरा धीमन्तः प्रज्ञाभिमानिनो जातिमिच्छन्तीत्यर्थः। एवं विरुद्धं वदन्तो मिथोजेतुमिच्छन्तीत्याह॥ विवदन्त इति॥ विरुद्धं वदन्तो ह्यन्योन्यमिच्छन्ति जेतुमित्यर्थः॥३॥

तैरेवं विरुद्धवदनेनान्योन्यपक्षप्रतिषेधं कुर्वद्भिः किं ख्यापितं भवतीत्युच्यते—

भूतं न जायते किञ्चिदभूतं नैव जायते॥
विवदन्तो द्वया ह्येवमजातिं ख्यापयन्ति ते॥ ४॥

भूतमिति॥ भूतं विद्यमानं वस्तु न जायते किञ्चिद्विद्यमानत्वादेव आत्मवदित्येवं वदन्नसद्वादी सांख्यपक्षं प्रतिषेधति सज्जन्म। तथा अभूतमविद्यमानमविद्यमानत्वाद् नैव जायते, शशविषाणवदित्येवं वदन् सांख्योऽप्यसद्वादिपक्षमसज्जन्म प्रतिषेधति॥ विवदन्तो विरुद्धं वदन्तो, द्वया द्वैतिनोऽप्येतेऽन्योन्यस्वपक्षौ सदसतोर्जन्मनी प्रतिषेधन्तोऽजातिमनुत्पत्तिमर्थात् ख्यापयन्ति प्रकाशयन्ति ते इत्यर्थः॥ ४॥

तर्हि प्रतिवादिभिरुक्तत्वादजातिरपि भवता प्रत्याख्येयेत्याशङ्क्याह—

ख्याप्यमानामजातिं तैरनुमोदामहे वयम् ॥
विवदामो न तैः सार्धमविवादं निबोधत ॥ ५ ॥

ख्याप्यमानामिति ॥ तैरेवं ख्याप्यमानामजातिमेवमस्त्वित्यनुमोदामहे केवलं, न तैर्द्वैतवादिभिः सार्द्धं विवदामः। पक्षप्रतिपक्षपरिग्रहणेन, यथा तेऽन्योन्यमित्यभिप्रायः। प्रतिवादिभिः सह विवादाऽभावे फलितमाह ॥ अविवादमिति ॥ अतस्तमविवादं विवादरहितं परमार्थदर्शनमनुज्ञातमस्माभिर्निबोधत, हे शिष्या इत्यर्थः ॥ ५ ॥

जातस्यैव जन्मानर्थक्यादनवस्थानाच्चाजातस्यैव पदार्थस्य जन्म सद्वादिनोऽसद्वादिनश्च सर्वेऽपि स्वीकुर्वन्तीति परपक्षमनुवदति—

अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिनः ॥
अजातो ह्यमृतो धर्मो मर्त्यतां कथमेष्यति ॥ ६ ॥

अजातस्येति ॥ तत्र शिष्टाभीष्टं दोषं प्रदर्श्याऽभ्यनुजानाति ॥ अजातो हीति ॥ अवशिष्टानि श्लोकाक्षराणि तृतीये व्याख्यातत्वान्न पुनर्व्याख्यानसापेक्षाणीति ध्येयम् ॥ ६ ॥

परिणामिब्रह्मवादे यद् ब्रह्मवादिभिर्दूषणमुच्यते तदप्यनुज्ञातमेवेति मत्वाह—

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ॥
प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥ ७ ॥

न भवतीति ॥ अमृतं हि ब्रह्म न तद्रूपे स्थिते मर्त्यं भवितुमर्हति। स्थितरूपविरोधात्। न च मर्त्यं कार्यं स्वरूपे स्थिते प्रलयावस्थायामममृतं ब्रह्म सम्पद्यते। नष्टेऽपि स्वरूपे तस्यैवाभावात्तु नान्यथात्वमित्यभिप्रेत्याह ॥ प्रकृतेरिति ॥ ७ ॥

किञ्च यस्य परिणामवादिनः स्वभावेनामृतः सन् परमात्माख्यो धर्मशब्दितो भावो मर्त्यतां कार्यभावापत्त्यागच्छति तस्य कृतकेन समुच्चयानुष्ठानेनाऽमृतो जीवो मुक्तो वक्तव्यः। स च कथं निश्चलः स्थातुं पारयति। यत् कृतकं तदनित्यमिति न्यायविरोधादित्याह—

स्वभावेनाऽमृतो यस्य धर्मो गच्छति मर्त्यताम् ॥
कृतकेनाऽमृतस्तस्य कथं स्थास्यति निश्चलः ॥ ८ ॥

स्वभावेनेति ॥ तृतीये उक्तार्थानां श्लोकानामिहोपन्यासः परवादि-

पक्षाणामन्योन्याविरोधख्यापितानुत्पत्त्यनुमोदनप्रदर्शनार्थं इति न पौनरुक्त्यमित्यर्थः ॥ ८ ॥

प्रकृतेरन्यथाभावो न कथञ्चिदित्युक्तम् । तत्र प्रकृतिशब्दार्थं कथयति—

**सांसिद्धिकी स्वाभाविकी सहजा अकृता च या ॥**
**प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ॥ ९ ॥**

सांसिद्धिकीति ॥ सम्यक् सिद्धिः संसिद्धिः साङ्गयोगमनुष्ठाय परिसमापनम् । तत्र भवा सांसिद्धिकी । यथा योगिनां सिद्धानामणिमाद्यैश्वर्यप्राप्तिः प्रकृतिः । सा भूतभविष्यत्कालयोरपि योगिनां न विपर्येति । तथैव हि सा । तथा स्वाभाविकी द्रव्यस्वभावत एव सिद्धा । यथाऽग्न्यादीनामुष्णप्रकाशादिलक्षणा । साऽपि न कालान्तरे व्यभिचरति देशान्तरे वा । तथा सहजा आत्मना सहैव जाता । यथा पक्ष्यादीनामाकाशगमनादिलक्षणा । अन्यापि याकाचिदकृता केनचिन्न कृता । यथाऽपां निम्नप्रदेशगमनादिलक्षणा । अन्याऽपि याकाचित् स्वभावं न जहाति सा सर्वा प्रकृतिरिति विज्ञेया । लोके मिथ्याकल्पितेष्वपि लौकिकेषु वस्तुषु प्रकृतिर्नान्यथा भवति, किमुत अजस्वभावेषु परमार्थवस्तुष्वऽमृतत्वलक्षणा प्रकृतिर्नान्यथा भवतीति भावः ॥ ९ ॥

प्रासङ्गिकीमेव जीवानां प्रकृतिं दर्शयितुं प्रक्रमते—

**जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः ।**
**जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया ॥ १० ॥**

जरेति ॥ सर्वे धर्मा आत्मानो जरामरणादिसर्वक्रियावर्जिताः स्वभावतः प्रकृतितो भवन्तीत्यर्थः । तेषामुक्तप्रकृतेरन्यथात्वे का क्षतिरित्याशङ्क्याह ॥ जरामरणमिति ॥ एवं स्वभावाः सन्तो धर्मा जरामरणमिच्छन्त इव इच्छन्तो रज्ज्वामिव सर्पमात्मनि कल्पयन्तश्च्यवन्ते स्वभावतश्चलन्ति ॥ तन्मनीषया जन्ममरणचिन्तया तद्भावभावितत्वदोषेणेत्यर्थः ॥ १० ॥

प्रासङ्गिकं परित्यज्य सांख्यपक्षे वैशेषिकादिभिरुच्यमानं दूषणमस्वनुज्ञातमनुभाषते—

कारणं यस्य वै कार्यं कारणं तस्य जायते ॥
जायमानं कथमजं भिन्नं नित्यं कथं च तत् ॥ ११ ॥

कारणमिति ॥ यस्य वादिनो मते कारणमेव कार्याकारेण परिणमते तस्याजमेव सत् प्रधानादिकारणं महदादिकार्यरूपेण जायत इति स्यादित्यर्थः । भवत्वजस्य जायमानत्वं, का क्षतिरित्याशङ्क्याऽजं प्रधानमिति प्रतिज्ञा हीयेत, जायमानं चाजमिति लोकविरुद्धं कथमेकत्र स्याद्, न कथमपीत्याह ॥ जायमानमिति ॥ नित्यं प्रधानमिति च प्रतिज्ञा तेषाम् । साऽप्यजत्ववदसम्भवी । महदादिकार्याकारेण भिन्नं विदीर्णं स्फुरितमेकदेशेन तत्प्रधानं कथं नित्यं भवेत् । न हि सावयवं घटादि एकदेशस्फुटं धर्मि नित्यं च दृष्टं लोके । विप्रतिषिद्धत्वादित्याह ॥ भिन्नमिति ॥ ११ ॥

किञ्च कार्यकारणयोरभेदे किं कारणाभिन्नं कार्यं, किं वा कार्याऽभिन्नं कारणमिति विकल्प्याद्यमनुवदति–

कारणाद्यद्यनन्यत्वमतः कार्यमजं यदि ॥
जायमानाद्धि वै कार्यात् कारणं ते कथं ध्रुवम् ॥१२॥

कारणादिति ॥ अतोऽस्मिन् पक्षे कार्यमजं स्यात् । तथाविधकरणाभिन्नत्वादिति दूषयति ॥अत इति॥ द्वितीयमनुद्रवति ॥यदीति॥ जायमानात् कार्यात्तु कारणमभिन्नं यदीति योजना । न तर्हि कारणं ध्रुवं भवितुमर्हति । कार्याभिन्नत्वात् । तस्य चाध्रुवत्वादित्याह ॥ कारणमिति ॥ १२ ॥

किञ्च यस्य प्रधानवादिनो मते अजादनुत्पन्नात् प्रधानादभिन्नं कार्यं जायते महदादीत्यभ्युपगम्यते तस्य पक्षे तस्मिन्नर्थे दृष्टान्तो वक्तव्यः । तदवष्टम्भेनैव तेनार्थव्यवस्थापनात् । नचात्रोभयसम्प्रतिपन्नो दृष्टान्तो दृष्टोऽस्तीति दोषान्तरमाह–

अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै ॥
जाताच्च जायमानस्य न व्यवस्था प्रसज्ज्यते ॥ १३ ॥

अजादिति ॥ यद्यजान्नित्याद्वस्तुनो जायमानमभ्युपगन्तुं न शक्यते, जाताच्च प्रधानाज्जायमानस्य महदादेर्जन्म स्यादितीच्छेत् तदा तदप्यन्यस्माज्जातात्तदप्यन्यस्मादिति न व्यवस्था प्रसज्ज्यते, अन-

वस्थानं स्यादित्याह ॥ जातादिति ॥ १३ ॥

द्वैतवादिभिरन्योन्यपक्षप्रतिक्षेपमुखेन ख्यापितं वस्तुनोऽजन्यत्वमद्वैतवादिनाऽभ्यनुज्ञातम् । इदानीं, यत्र त्वस्य सर्वमात्मैवाभूदिति श्रुत्या विद्वदनुभवेन च सिद्धं द्वैतस्य दुर्निरूप्यत्वमभ्यनुज्ञातमित्याह–

**हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ॥**
**हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते ॥ १४ ॥**

हेतोरिति ॥ कारणं कार्यं चानादिरिति तेषां प्रतिज्ञान्तरम् । तदपि दुर्निरूप्यम् । यतो हेतोर्धर्माधर्मादेरादिः कारणं देहादिसङ्घातः फलं येषां वादिनां तथादिः कारणं हेतुर्धर्मादिः फलस्य च देहादिसङ्घातस्य । एवं हेतुफलयोरितरेतरकार्यकारणत्वेनादिमत्त्वं ब्रुवद्भिरेव हेतोः फलस्य चानादित्वं कथं तैरुपवर्ण्यते विप्रतिषिद्धम् । न हि नित्यस्य कूटस्थस्यात्मनो हेतुफलात्मकता सम्भवतीत्यर्थः ॥ १४ ॥

हेतुफलयोरन्योन्यमादिमत्त्वं ब्रुवता तदात्मकस्य संसारस्यानादिमत्त्वं विप्रतिषिद्धमित्युपपादितम् । सम्प्रति कार्यकारणभावोऽपि तयोर्न सम्भवतीत्याह–

**हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ॥**
**तथा जन्म भवेत्तेषां पुत्राज्जन्म पितुर्यथा ॥ १५ ॥**

हेतोरित्यादिना ॥ हेतुजन्मरूपादेव फलाद्धेतोर्जन्माभ्युपगच्छतां तेषामीदृशो विरोध उक्तो भवति । यथा पुत्राज्जन्म पितुरित्यर्थः ॥१५॥

प्रतीतितो हेतुफलयोरुत्पत्तेरुपगन्तव्यत्वान्न युक्तं तन्निराकरणमित्याशङ्क्याह–

**संभवे हेतुफलयोरेषितव्यः क्रमस्त्वया ॥**
**युगपत्संभवे यस्मादसंबन्धो विषाणवत् ॥ १६ ॥**

सम्भव इति ॥ प्रतीतितोऽपि हेतुफलयोः सम्भवे उत्पत्तौ क्रम एषितव्यस्त्वयाऽन्वेष्टव्यः । हेतुः पूर्वं पश्चात् फलं चेत्यर्थः । प्रतीत्या क्रमस्वीकारवदुपपत्तेश्चेत्याह ॥ युगपदिति ॥ युगपत्सम्भवे यस्माद्धेतुफलयोः कार्यकारणत्वेनासंबन्धः । यथा युगपत्सम्भवतोः सव्येतरगोविषाणयोस्तद्वदित्यर्थः ॥ १६ ॥

ययोर्युगपत् सम्भवस्तयोर्न कार्यकारणत्वम् । यथा गोविषाणयोरित्युक्तव्याप्तेरनुग्राहकं तर्कमुपन्यस्यति-

फलादुत्पद्यमानः सन्न ते हेतुः प्रसिद्ध्यति ॥
अप्रसिद्धः कथं हेतुः फलमुत्पादयिष्यति ॥ १७ ॥

फलादिति ॥ स्वतो हेतुस्वरूपाज्जन्यं फलं तदधीनत्वेन लब्धात्मकं, स्वतश्चालब्धात्मकं, तादृशात् फलादुत्पद्यमानः सन्नेष हेतुर्न प्रसिद्ध्यति जन्म न लभते । न खलु शशविषाणादेरसतः सकाशात् किञ्चिल्लब्धात्मकमुपलभ्यते । हेतुश्चेदसिद्धोऽलब्धात्मकोऽभ्युपगतः स तर्हि तथाविधोऽसद्रूपः सन्न ते तव फलमुत्पादयितुमुत्सहते । न हि सद्वादिमते फलमसतः सकाशादुपलब्धचरम् । अतो हेतुफलभावस्यैवासिद्धिरित्यर्थः ॥ १७ ॥

हेतुफलयोर्यौगपद्ये सत्यन्यतरस्यापि न पूर्वक्षणे सत्तेत्यसतोः शशविषाणयोरिवान्योन्यापेक्षया जन्यजनकत्वं नोपपद्यते । शशविषाणादिष्वपि प्रसङ्गादित्युक्तम् । इदानीं पुण्यो वै पुण्येन कर्मणा भवतीत्यादिश्रुतेर्धर्मादिषु हेतुफलभावमाशङ्क्य श्रुतेरसम्भावितार्थे प्रामाण्यायोगादवश्यं पौर्वापर्यं वक्तव्यमित्याह-

यदि हेतोः फलात्सिद्धिः फलसिद्धिश्च हेतुतः ॥
कतरत् पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया ॥ १८ ॥

यदीति ॥ असम्बन्धतादोषेणापोदितेऽपि हेतुफलयोः कार्यकारणभावे यदि हेतुफलयोरन्योन्यसिद्धिरभ्युपगम्यत एव त्वया, कतरत् पूर्वनिष्पन्नं हेतुफलयोर्यस्य पश्चाद्भाविनः सिद्धिः स्यात् पूर्वसिद्ध्यपेक्षया तद् ब्रूहीत्यर्थः ॥ १८ ॥

हेतुफलयोरिदं पूर्वमिदं पश्चादिति न ज्ञायते । परस्पराश्रयात् । अतश्चेदं पूर्वं निष्पन्नमिति वक्तुमशक्यमित्याह-

अशक्तिरपरिज्ञानं क्रमकोपोऽथ वा पुनः ॥
एवं हि सर्वथा बुद्धैरजातिः परिदीपिता ॥ १९ ॥

अशक्तिरिति ॥ उत्तरावसरे चेत्तदुत्तरापरिज्ञानं तर्हि कथयाऽशक्तिसूचकं तन्निग्रहस्थानमप्रतिभाभिधानमापततीत्यर्थः । अथवा योऽयं त्वयोक्तः क्रमः हेतोः फलस्य सिद्धिः फलाच्च हेतोः सिद्धिरिती-

तरेतरानन्तर्यलक्षणस्तस्य कोपो विपर्यासोऽन्यथाभावः प्रतिज्ञाहानिर्निग्रहान्तरमापद्येतेत्याह ॥ क्रमेति ॥ एवं हेतुफलयोः कार्यकारणभावाऽनुपपत्तेरजातिः सर्वस्यानुत्पत्तिः परिदीपिता प्रकाशिताऽन्योन्यपक्षे दोषं ब्रुवद्भिर्वादिभिः पण्डितैरित्याह ॥ एवमिति ॥ १९ ॥

बीजाङ्कुरयोरिव हेतुफलयोरन्योन्यत्वं, कार्यकारणभावाभ्युपगमाच्चान्योन्याश्रयत्वमित्याशङ्क्य बीजाङ्कुराख्यो दृष्टान्तो यः स साध्येन हेतुफलात्मकेन समस्तुल्योऽन्योन्याश्रयत्वेन सर्वदैवायुक्त इत्याह—

बीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः ॥
न हि साध्यसमो हेतुः सिद्धौ साध्यस्य युज्यते ॥२०॥

बीजेति ॥ दृष्टान्तस्य साध्यसमत्वेऽपि साधकत्वमस्त्वित्याशङ्क्याह ॥ न हीति ॥ न खलु लोके साध्यसमो हेतुः संदिग्धदृष्टान्तः साध्यस्य सिद्धौ सिद्धिनिमित्तं प्रयुज्यते प्रमाणकुशलैरित्यर्थः ॥ २० ॥

कथमन्योन्यपक्षं प्रतिक्षिपद्भिरजातिः परिदीपितेति ? तत्राह—

पूर्वापरापरिज्ञानमजातेः परिदीपकम् ॥
जायमानाद्धि वै धर्मात् कथं पूर्वं न गृह्यते ॥ २१ ॥

पूर्वापरेति ॥ यदेतद्धेतुफलयोः पूर्वापरापरिज्ञानं तच्चैतदजातेः परिदीपकमवबोधकमित्यर्थः । कार्यस्य गृह्यमाणत्वादजातिरसिद्धेत्याशङ्क्य जायमानो हि चेद्धर्मो गृह्यते कथं तस्मात् पूर्वं कारणं न गृह्यते । अवश्यं हि जायमानस्य ग्रहीत्रा तज्जनकं ग्रहीतव्यम् । जन्यजनकयोः सम्बन्धस्यानपेक्षितत्वात् । तस्मादितरेतराश्रयत्वेनाजातिपरिदीपकं तदित्याह ॥ जायमानादिति ॥ २१ ॥

कस्यचिदपि वस्तुनो वस्तुतो जन्म नास्तीति षोढाविकल्पपूर्वकं साधयति—

स्वतो वा परतो वाऽपि न किंचिद्वस्तु जायते ॥
सदसत् सदसद्वाऽपि न किञ्चिद्वस्तु जायते ॥ २२ ॥

स्वत इति ॥ स्वयमेव जायमानं कार्यं स्वस्मादेव स्वरूपान्न तावज्जायते । कार्यस्य स्वकारणाधीनतया पूर्वमसिद्धत्वात् । अन्यथा स्वसिद्धेः स्वसिद्धिरित्यात्माश्रयात् । न हि घटादेवघटो जायमानो दृष्टः। नापि परतोऽन्यस्मादन्यो जायते । यथा घटात् पटः पटात् पटान्तर-

म्। तथा नोभयतः। विरोधात्। न हि घटपटाभ्यां घटः पटो वा जायमानो दृश्यते। सश्चेद्, न जायते सत्त्वान्मृत्पिण्डादिवत्। यद्यसत्तथापि न जायते। असत्त्वादेव। शशविषाणादिवत्। अथ सदसत्तथापि न जायते। विरुद्धस्यैकस्यासंभवादतो न किञ्चिद्वस्तु जायते इति सिद्धमित्यर्थः॥ २२॥

वस्तुनो वस्तुतो जन्मराहित्ये हेत्वन्तरमाह-

हेतुर्न जायतेऽनादेः फलं चापि स्वभावतः॥
आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते॥ २३॥

हेतुर्नेति॥ नाऽनादेरादिरहितात् फलात् संघाताद्धेतुर्जायते। सदा तज्जन्मप्रसङ्गादित्यर्थः। फलं चादिरहितादनादेर्हेतोरजाद् धर्मादेः सकाशात् स्वभावत एव निर्निमित्तं जायत इति नाभ्युपगम्यते। दोषसाम्यादित्याह॥ फलं चेति॥ निमित्तमन्तरेण हेतुफलयोर्जन्माभावे हेतुमाह॥ आदिरिति॥ यस्मादादिः कारणं विद्यते यस्य लोके तस्य ह्यादिः पूर्वोक्ता जातिर्न विद्यते। कारणवत एव ह्यादिरभ्युपगम्यते, नाकारणवतः। तस्मादनादित्वमभ्युपगच्छता त्वया हेतुफलयोरजन्मैवाभ्युपगम्यत इत्यर्थः॥ २३॥

वस्तुनो वस्तुतो जन्मायोगादजं विज्ञानमात्रं तत्त्वमित्युक्तमिदानीं तस्यैव दृढीकरणचिकीर्षया बाह्यार्थवादमुत्थापयति-

प्रज्ञप्तेः सनिमित्तत्वमन्यथा द्वयनाशतः॥
संक्लेशस्योपलब्धेश्च परतन्त्रास्तिता मता॥ २४॥

प्रज्ञप्तेरिति॥ प्रज्ञानं प्रज्ञप्तिः शब्दादिप्रतीतिः। तस्याः सनिमित्तत्वं सविषयत्वं स्वात्मव्यतिरिक्तविषयतेति प्रतिज्ञायां प्रत्ययवैचित्र्यानुपपत्तिं प्रमाणयति॥ अन्यथेति॥ ज्ञानस्य निर्विषयत्वे शब्दस्पर्शनीलपीतादिप्रत्ययवैचित्र्यस्य द्वयस्य नाशतः नाशोऽभावः प्रसज्येत। अतः स्फटिकस्येव नीलाद्याश्रयैः प्रत्ययवैचित्र्यस्य दर्शनात् परेषां तन्त्रं परतन्त्रमित्यन्यशास्त्रं तस्य परतन्त्राश्रयस्य बाह्यार्थस्य ज्ञानव्यतिरिक्तस्यास्तितता मताऽभिप्रेतेत्यर्थः। संक्लेशनं संक्लेशोऽग्न्यादिदाहनिमित्तं दुःखम्। तस्य प्रत्यक्षत्वाच्च परतन्त्राश्रयस्य बाह्यार्थस्य ज्ञानव्यतिरिक्तस्यास्तितेत्याह॥ संक्लेशस्येति॥ २४॥

द्वाभ्यामर्थापत्तिभ्यां बाह्यार्थवादे प्राप्ते विज्ञानवादमुद्भावयति—

प्रज्ञप्तेः सनिमित्तत्वमिष्यते युक्तिदर्शनात् ॥
निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात् ॥ २५ ॥

प्रज्ञप्तेरिति ॥ बाढमेवं प्रज्ञप्तेः सनिमित्तत्वं द्वयसंक्लेशोपलब्धियुक्तिदर्शनादिष्यते त्वया । तथाऽपि निमित्तस्य प्रज्ञप्त्यालम्बनाभिमतस्य तव घटादेरनिमित्तत्वमनालम्बनत्वं वैचित्र्याहेतुत्वमिष्यतेऽस्माभिः । कथम् ? भूतदर्शनात् परमार्थदर्शनात् । न हि परमार्थभूतमृद्रूपव्यतिरेकेण घटो नामास्ति, पटो वा तन्तुव्यतिरेकेण, तन्तवश्चांशुव्यतिरेकेणेति । कुतो बाह्यार्थसत्तेत्याह ॥ निमित्तस्येति ॥ अथवा अभूतदर्शनाद् बाह्यार्थस्यानिमित्तत्वमिष्यते रज्ज्वादाविव सर्पादेस्तत्त्वदर्शिनां स्फुरणातिरिक्तवस्त्वनुपलम्भाद्वैचित्र्यदर्शनं दुःखोपलब्धिश्चार्थाभावेऽपि स्वप्नवद् भ्रान्त्या सङ्गच्छते इत्यर्थः ॥ २५ ॥

यस्मान्नास्ति बाह्यं निमित्तम् अतश्चित्तं न संस्पृशत्यर्थं बाह्यालम्बनविषयमित्याह—

चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च ॥
अभूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक् ॥ २६ ॥

चित्तमिति ॥ चित्तस्यार्थस्पर्शित्वाभावेऽपि तदाभासस्पर्शित्वं स्यादित्याशङ्क्य, नाप्यर्थाभासं चित्तत्वात् स्वप्नचित्तवदित्याह ॥ नेति ॥ अभूतो हि जागरितेऽपि स्वप्नार्थवदेव बाह्यः शब्दाद्यर्थो यतोऽतो न स्वविषयज्ञानजनको भवतीत्याह ॥ अभूत इति ॥ अर्थजन्यत्वाभावे विज्ञानस्यार्थाभासजन्यत्वं स्यादित्याशङ्क्य, नाप्यर्थाभासश्चित्तात् पृथग् विद्यते । चित्तमेव हि घटाद्यर्थवदवभासते, यथा स्वप्ने । ज्ञानजनकत्वं तु तस्य दूरापास्तमित्याह ॥ नार्थेति ॥ २६ ॥

ज्ञानस्य सालम्बनत्वाभावे तस्य तथात्वप्रथा भ्रान्तिर्भवेत् । भ्रान्तिश्च पूर्वदृष्टसद्वस्तुस्मरणपूर्विकेत्यन्यथाख्यातिमतमाशङ्क्य निमित्तं विषयमतीतानागतवर्तमानाध्वसु त्रिष्वपि सदा चित्तं न संस्पृशेदेवेत्याह—

निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु ॥
अनिमित्तो विपर्यासः कथं तस्य भविष्यति ॥ २७ ॥

निमित्तमिति ॥ कालत्रयेऽपि ज्ञानस्य वस्तुतोऽर्थस्पर्शित्वाभावे तद्वासनाभावात्तज्जन्यान्यथाख्यातिः सिद्ध्यति । भ्रान्तिस्त्वविद्ययाऽपि भविष्यतीत्याह ॥ अनिमित्त इति ॥ तस्मादनिमित्तो विपर्यासः कथं तस्य चित्तस्य भविष्यति । न कथञ्चिद्विपर्यासोऽस्ति । अयमेव हि स्वभावश्चित्तस्य यदुतासति निमित्ते घटादौ तद्वदवभासनमित्यर्थः ॥ २७ ॥

बाह्यार्थवादिपक्षमेवं विज्ञानवादिमुखेन प्रतिक्षिप्य विज्ञानवादमिदानीमपवदति–

तस्मान्न जायते चित्तं चित्तदृश्यं न जायते ॥
तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम् ॥२८॥

तस्मादिति ॥ यस्मादसत्येव घटादौ घटाद्याभासता चित्तस्य विज्ञानवादिनाऽभ्युपगता तदनुमोदितमस्माभिरपि भूतदर्शनात् । तस्मात्तस्यापि चित्तस्य जायमानावभासता सत्येव जन्मनि युक्ता भवितुमित्यतो न जायते चित्तम् । यथा चित्तदृश्यं न जायत इत्यर्थः। प्रतिक्षणं विज्ञानस्य जन्म दृश्यते विज्ञानवादिभिरित्याशङ्क्य तस्य चित्तस्य ये जातिं पश्यन्ति विज्ञानवादिनः क्षणिकत्वदुःखित्वशून्यत्वाऽनात्मत्वादि, तेनैव चित्तेन चित्तस्वरूपं द्रष्टुमशक्यं पश्यन्तः खे वै पश्यन्ति ते पदं पक्ष्यादीनामत इतरेभ्योऽपि द्वैतिभ्योऽत्यन्तसाहसिका इत्याह ॥ तस्येति ॥ २८ ॥

यदि विज्ञानस्य बाह्यालम्बनत्वक्षणिकत्वादि न सम्भवति, किं तर्हि तत्त्वमेकरूपं सम्भवतीत्याशङ्क्याजमेकं ब्रह्मेति सिद्धमुपसंहरति–

अजातं जायते यस्मादजातिः प्रकृतिस्ततः ॥
प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥ २९ ॥

अजातमिति ॥ यच्चित्तं ब्रह्मैव जायत इति वादिभिः परिकल्प्यते तदजातं जायते । यस्मादजातिः प्रकृतिस्तस्य । ततस्तस्माद् अजातरूपायाः प्रकृतेरन्यथाभावो जन्म न कथञ्चिद्भविष्यतीत्याह ॥ प्रकृतेरिति ॥ २९ ॥

कूटस्थं तत्त्वं तात्त्विकमिति वदन्नात्मनः संसारमोक्षयोः परमार्थसद्भाववादिनां दोषान्तरमाह—

अनादेरन्तवत्त्वं च संसारस्य न सेत्स्यति ॥
अनन्तता चाऽऽदिमतो मोक्षस्य न भविष्यति ॥३०॥

अनादेरिति ॥ आदिवर्जितस्य संसारस्यान्तवत्त्वं समाप्तिर्न सेत्स्यति, युक्तितः सिद्धिं नोपयास्यत्यनादिभावत्वादात्मवदित्यर्थः। तथाऽनन्तताऽपि विज्ञानप्राप्तिकालप्रभवस्य मोक्षस्यादिमतो न भविष्यति। भावत्वे सत्यादिमत्त्वाद् घटवदित्याह ॥ अनन्ततेति ॥३०॥

अस्तु तर्हि मोक्षस्याद्यन्तवत्त्वं तत्राह—

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥३१॥

आदाविति ॥ यदित्यूषरोदकादि गृह्यते। तथा वस्तुतो नास्त्येवेति यावत्। वितथैस्तैरेव मरीच्युदकादिभिः सादृश्यमाद्यन्तवत्त्वम्। विमता मोक्षादयो न परमार्थसन्तो भवितुमर्हन्ति। आद्यन्तवत्त्वाद् मरीच्युदकादिवदित्यर्थः। कथं तर्हि मोक्षादीनामपि तथात्वप्रथेत्याशङ्क्याह ॥ अवितथा इति ॥ लक्षिता मूढैरविचारकैरिति शेषः ॥ ३१ ॥

ऊषरोदकादीनां स्नानपानादिप्रयोजनानुपलम्भान्मोक्षस्वर्गादीनां तु सुखादिप्राप्तिप्रयोजनप्रतिलम्भान्न मोक्षादिवैतथ्यमित्याशङ्क्याह—

सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ॥
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ ३२ ॥

सप्रयोजनतेति ॥ तेषां मोक्षादीनामिति यावत्। वैतथ्ये कृतव्याख्यानौ श्लोकाविह संसारमोक्षाभावप्रसङ्गेन पठितावतो न पौनरुक्त्यमित्यर्थः ॥ ३२ ॥

किञ्च। येन हेतुना स्वप्नस्य मिथ्यात्वमिष्टं तस्य जागरितेऽपि तुल्यत्वाज्जन्मादिरहितं संविन्मात्रं तत्त्वमेष्टव्यमिति विवक्षित्वाह—

सर्वे धर्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात् ॥
संवृतेऽस्मिन् प्रदेशे वै भूतानां दर्शनं कुतः ॥ ३३ ॥

सर्व इति ॥ यदि देहान्तर्दर्शनान्मिथ्यात्वं स्वप्नस्येष्टं तर्हि वैराजदेहे सर्वस्य जागरितस्य दर्शनान्मिथ्यात्वं दुर्वारमित्यर्थः। किञ्च

योग्यदेशवैधुर्यान्मिथ्यात्वं स्वप्नस्य यदभीष्टं तर्हि संवृते प्रदेशे प्रत्यग्भूते ब्रह्मण्यखण्डैकरसे भूतानां विद्यमानानां दर्शनं न कुतोऽपि स्याद् ब्रह्मणोऽनवकाशत्वादित्याह ॥ संवृत इति ॥ निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनादित्ययमर्थः प्रपञ्च्यते, आदावन्ते चेत्यारभ्य, जात्याभासमित्यस्मात् प्राक्तनैः श्लोकैरित्यर्थः ॥ ३३ ॥

उक्तमेवार्थं प्रपञ्चयति—

**न युक्तं दर्शनं गत्वा कालस्यानियमाद्गतौ ॥**
**प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ॥ ३४ ॥**

न युक्तमिति ॥ स्वप्ने देशान्तरगतौ नियतकालाभावान्न गत्वा दर्शनमिष्टम् । तथा मरणादूर्ध्वमर्चिरादिमार्गेण गत्वा ब्रह्मदर्शनमयुक्तम् । कालानवच्छिन्नत्वादित्यर्थः । किञ्च यद्देशस्थः स्वप्नं पश्यति, प्रतिबुद्धस्तस्मिन् देशे नास्तीति मिथ्यात्वमिष्टम् । तथा यस्मिन् देशे स्थितः संसारमनुभवति ब्रह्मभावं प्रतिपन्नस्तस्मिन् देहदेशे नास्ति । परिपूर्णब्रह्मरूपेणावस्थानादतो जागरितस्यापि मिथ्यात्वमेष्टव्यमित्याह ॥ प्रतिबुद्धश्चेति ॥ ३४ ॥

किञ्च यथा स्वप्ने विसंवादादप्रामाण्यमिष्टं तथा जागरितेऽपि परं श्रेयोऽस्माभिः साधनीयमिति सब्रह्मवादिभिः सह समालोच्याविद्यानिद्रातः प्रतिबुद्धो नैव श्रेयःसाध्यत्वमालोचितं प्रतिपद्यते । सर्वस्य नित्यमुक्तत्वनिश्चयादतो मुमुक्षुत्वं श्रवणादिकर्तव्यता च भ्रान्त्यैवेत्याह—

**मित्राद्यैः सह संमन्त्र्य संबुद्धो न प्रपद्यते ॥**
**गृहीतं चापि यत्किञ्चित् प्रतिबुद्धो न पश्यति ॥३५॥**

मित्राद्यैरिति ॥ किञ्च स्वप्नवदेव गृहीतमुपदेशादि विद्वान्न पश्यति । तत्साध्यफलाभावादित्याह ॥ गृहीतं चेति ॥ अथवा लोकदृष्ट्या यत्किञ्चिद् गृहीतं वस्त्रान्नोदकादि तद्विद्वान्नैव किञ्चित् करोमीति प्रबुद्धोऽन्यप्रत्ययबाधात स्वसंबन्धित्वेनाधिगच्छति । तेन तदाभासमात्रमेवेत्याह ॥ गृहीतं चेति ॥ ३५ ॥

किञ्च । स्वप्नावस्थायां येन देहेन नद्यादिषु पर्यटति स मिथ्या । पृथग्भूतस्य निश्चितस्य देहस्य दर्शनात् । तथा जागरितेऽपि येन

परिव्राजकादिशरीरेण लोकस्य पूज्यो द्वेष्यो वा दृश्यते स मिथ्या कथ्यते । पृथगेव कूटस्थब्रह्माख्यशरीरस्यानुभवादित्याह—

**स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात् ॥**
**यथा कायस्तथा सर्वं चित्तदृश्यमवस्तुकम् ॥ ३६ ॥**

स्वप्ने चेति ॥ किञ्च यथा स्वप्ने देहो मिथ्या, तथा चित्तदृश्यं जडं सर्वमवस्तुकं मिथ्याभूतं जागरितेऽपि चित्तदृश्यत्वादेषितव्यमित्याह ॥ यथेति ॥ ३६ ॥

कार्यस्य मिथ्यात्वे कारणस्यापि मिथ्यात्वमिति न्यायादपि जागरितस्य मिथ्यात्वमित्याह–

**ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न इष्यते ॥**
**तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते ॥ ३७ ॥**

ग्रहणादिति ॥ जागरितवज्जागरितस्येव ग्रहणाद् ग्राह्यग्राहकरूपेण स्वप्नस्य तज्जागरितं हेतुरस्य स्वप्नस्य स स्वप्नस्तद्धेतुको जागरितकार्यमिष्यते इष्टमेवातः कार्यमिथ्यात्वात् कारणं मिथ्येत्यर्थः । जागरितस्य विद्यमानत्वानेकसाधारणत्वाभावाच्च मिथ्यात्वमित्याह ॥ तद्धेतुत्वादिति ॥ तद्धेतुत्वाज्जागरितकार्यत्वात् तस्यैव स्वप्नदृश एव सज्जागरितं, न त्वन्येषाम् । यथा स्वप्नः स्वप्नदृश एव सन् साधारणविद्यमानवस्तुवदवभासते तथा तत्कारणत्वात् साधारणविद्यमानवस्तुवदवभासमानं, न तु साधारणं, विद्यमानवस्तुस्वप्नवदेवेत्यभिप्रायः ॥ ३७ ॥

ननु स्वप्नं प्रति कारणत्वेऽपि जागरितवस्तुनो न स्वप्नवदवस्तुत्वम् । अत्यन्तचञ्चलो हि स्वप्नो, जागरितं तु स्थिरमित्याशङ्क्याऽविवेकिनामेवमपि, विवेकिनां तु न कस्यचिद्वस्तुन उत्पादः प्रसिद्धोऽतोऽप्रसिद्धत्वादुत्पादस्यात्मैव सर्वमित्यजं सर्वमुदाहृतं वेदान्तेषु, सबाह्याभ्यन्तरो ह्यज इत्याह–

**उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम् ॥**
**न च भूतादभूतस्य संभवोऽस्ति कथञ्चन ॥ ३८ ॥**

उत्पादस्येति ॥ यदपि मन्यसे जागरितात् सतोऽसत्स्वप्नो जाय-

ते इति। तदसत्। न भूताद्विद्यमानादभूतस्यासतः सम्भवोऽस्ति लोके। न ह्यसतः शशविषाणादेः सम्भवो दृष्टः कथञ्चिदपीत्याह॥ न चेति॥ ३८॥

ननूक्तं त्वयैव, स्वप्नो जागरितकार्यमिति। तत् कथमुत्पादोऽप्रसिद्ध इत्याशङ्क्यासदविद्यमानं रज्जुसर्पवद्विकल्पितं वस्तु जागरिते दृष्ट्वा तद्भावभावितस्तन्मयः स्वप्नेऽपि जागरितवद्ग्राह्यग्राहकरूपेण विकल्पयन् पश्यतीत्याह—

**असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः॥**
**असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति॥३९॥**

असदिति॥ तथाऽसत् स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति अविकल्पयन्, च-शब्दात्तथा जागरितेऽपि दृष्ट्वा स्वप्ने न पश्यति कदाचित्। तस्मात् प्रायशो जाग्रद्वासनाधीनत्वाज्जागरितं स्वप्नहेतुरुच्यते, न तु परमार्थसदिति न पूर्वापरविरोधइत्याह॥असदिति॥३९॥

व्यवहारदृष्ट्या कार्यकारणत्वं स्वप्नजागरितयोरुक्तम्। परमार्थतस्तु न कस्यचित् केनचिदपि प्रकारेण कार्यकारणभाव उपपद्यत इत्याह—

**नास्त्यसद्धेतुकमसत्सदसद्धेतुकं तथा॥**
**सच्च सद्धेतुकं नास्ति सद्धेतुकमसत् कुतः॥४०॥**

नास्तीति॥ असच्छशविषाणादि हेतुः कारणं यस्यासत एव खपुष्पादेस्तदसद्धेतुकमसन्न विद्यते इत्यर्थः। सदेव कार्यं जायते शून्यादिति शून्यमतमाशङ्क्य, सदपि घटादि वस्तु असद्धेतुकं, शशविषाणादिकार्यं तथा नास्तीत्याह॥ सदिति॥ कार्यकारणयोर्द्वयोरपि सत्त्वमिति सांख्यमतमाशङ्क्य सच्च विद्यमानं घटादि सद्धेतुकं विद्यमानघटादिवस्त्वन्तरकार्यं नास्तीत्याह॥ सच्चेति॥ सद्ब्रह्म कारणं मिथ्याप्रपञ्चसृष्टेरित्येकदेशिमतमाशङ्क्य, सत्कार्यमसत् कुत एव संभवति। न चान्यः कार्यकारणभावः संभवति, शक्यो वा कल्पयितुमतोऽनिर्वाच्यं मायामयं प्रतीतिमात्रं कार्यकारणमित्याह॥सदिति॥४०॥

स्वप्नजागरितयोर्वस्तुतो नास्ति कार्यकारणत्वमित्यत्रैव हेत्वन्तरमाह—

विपर्यासाद्यथा जाग्रदचिन्त्यान् भूतवत् स्पृशेत् ॥
तथा स्वप्ने विपर्यासाद्धर्मांस्तत्रैव पश्यति ॥ ४१ ॥

विपर्यासादिति ॥ अविवेकतो यथा जागरितेऽचिन्त्यान् भावान् अशक्यचिन्तनीयान् रज्जुसर्पादीन् भूतवत् परमार्थवत् स्पृशेत् स्पृशन्निव विकल्पयेत् कश्चिद् यथा तथा स्वप्ने विपर्यासाद्धस्त्यादीन् धर्मान् पश्यन्निव विकल्पयति, तत्रैव पश्यति, न तु जागरितादुत्पन्नाना-मतो विवेकिनामसिद्ध एव कार्यकारणभावः कस्याचिदित्यभिप्रायः॥४१

तत्त्वदृष्ट्या कार्यकारणत्वस्याप्रसिद्धत्वे कथं जन्मादिसूत्रप्रमुखैः सूत्रैर्जगत् कारणं ब्रह्म सूत्रितमित्याशङ्क्याऽविवेकिनां विवेकोपायत्वेन कार्यकारणत्वमुपेत्य सूत्रकारप्रवृत्तिरित्याह—

उपलम्भात् समाचारादस्तिवस्तुत्ववादिनाम् ॥
जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा ॥ ४२ ॥

उपलम्भादिति ॥ याऽपि बुद्धैरद्वैतवादिभिर्जातिर्देशितोपदिष्टा । उपलम्भनम् उपलम्भस्तस्मादुपलब्धेः समाचाराद् वर्णाश्रमादिधर्म-समाचरणादाभ्यां हेतुभ्यामस्तिवस्तुत्ववादिनामस्तिवस्तुभावो द्वैत-स्येत्येवंवदनशीलानां दृष्टाऽऽग्रहवतां श्रद्दधानानां मन्दविवेकिना-मर्थोपायत्वेन ब्रह्मणः सकाशादशेषं जगद्भवतीत्युपेत्य तदतिरेकेण जगतोऽभावाद्ब्रह्मैव सर्वमिति निश्चित्य तद्विषयेषु च वेदान्तेषु पौर्वा-पर्येणालोचितेषु तदभ्यासिनां तेषां तदभ्यासप्रसाददेव कूटस्था-ऽद्वितीयात्मविवेको भविष्यतीत्यभिप्रायेण सन्देशिता जातिर्न तु परमा-ऽर्थबुद्ध्या, ये हि श्रोत्रियाः स्थूलबुद्धित्वादजातेरजातिवस्तुनः सदा त्रस्यन्त्यात्मनाशं मन्यमाना अविवेकिनस्तेषामित्यर्थः । उपायः सो-ऽवतारायेत्युक्तम् ॥ ४२ ॥

उदरमन्तरं कुरुते अथ तस्य भयं भवतीत्यादिश्रुतिभ्यो ब्रह्मणि विकारदर्शिनां भयप्राप्तिः श्रूयते । तथाच श्रोत्रियाणामपि भेददर्शिनां नानुग्राह्यतेत्याशङ्क्याह—

अजातेस्त्रसतां तेषामुपलम्भाद्वियन्ति ये ॥
जातिदोषा न सेत्स्यन्ति दोषोऽप्यल्पो भविष्यति॥४३॥

अजातेरिति ॥ ये चैवमुपलम्भात् समाचाराच्चाऽजातेरजातिवस्तुनस्त्रसन्तोऽस्ति वस्त्वित्यद्वयात्मनो वियन्ति विरुद्धं यन्ति द्वैतं प्रतिपद्यन्ते तेषामजातेस्त्रसतां श्रद्दधानानां सन्मार्गावलम्बिनां जातिदोषाः जात्युपलम्भकृता दोषा न सेत्स्यन्ति सिद्धिं नोपयास्यन्ति । विवेकमार्गप्रवृत्तत्वात् । न हि कल्याणकृत् कश्चिदिति स्मरणादित्यर्थः । यद्यपि निन्दानुपपत्त्या कश्चिद्दोषः स्यात् सोऽप्यल्प एव भविष्यति सम्यग्दर्शनाप्रतिपत्तिहेतुको गर्भवासादिलक्षण इत्यभ्यनुजानाति ॥ दोषोऽपीति ॥ ४३ ॥

ननूपलम्भसमाचारयोः प्रमाणत्वादस्त्येव द्वैतं वस्त्विति चेन्न । उपलम्भसमाचारौ मायामये हस्तिनि वस्तुत्वाभावेऽपि भवत इत्याह—

**उपलम्भात् समाचारान्मायाहस्ती यथोच्यते ॥**

**उपलम्भात् समाचारादस्ति वस्तु तथोच्यते ॥ ४४ ॥**

उपलम्भादिति ॥ उपलभ्यते हि मायाहस्ती । हस्तीव हस्ती । तमिवात्र समाचरन्ति बन्धनाऽऽरोहणादिहस्तिसम्बन्धिभिर्धर्मैः । हस्तीतिचोच्यते असन्नपि यथा तथैवोपलम्भात् समाचाराद् द्वैतं भेदरूपमस्तिवस्त्वित्युच्यते । तस्मादुपलम्भसमाचारयोर्व्यभिचारान्न तद्वशाद् द्वैतवस्तुसत्तेत्यर्थः ॥ ४४ ॥

भूतदर्शनावष्टम्भेन निमित्तस्यानिमित्वमुक्तमेतदन्तैः श्लोकैर्विप्रपञ्चितम् । संप्रति भूतदर्शनमुपसंहरति—

**जात्याभासं चलाभासं वस्त्वाभासं तथैव च ॥**

**अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम् ॥ ४५ ॥**

जात्याभासमिति ॥ अजाति सज्जातिवदवभासत इति जात्याभासम् । तद्यथा, देवदत्तो जायते इति । चलाभासं चलनमिवाभासत इति । यथा, स एव देवदत्तो गच्छतीति । वस्त्वाभासं वस्तु द्रव्यं धर्मि तद्वदवभासत इति वस्त्वाभासम् । यथा, स एव देवदत्तो गौरो दीर्घ इति जायते, देवदत्तः स्पन्दते दीर्घो गौर इत्येवमवभासते । परमार्थतस्त्वजमचलमवस्तुत्वमद्रव्यत्वं च । तदेवम्प्रकारं विज्ञानं विज्ञप्तिर्ज्ञात्रादिरहितत्वाच्छान्तमत एवाद्वयं च तदित्यर्थः ॥ ४५ ॥

एवं कार्यकारणभावस्य दुर्भणत्वादिभ्य उक्तहेतुभ्यो न जायते चित्तं चैतन्यं ब्रह्मेत्युक्तमुपसंहरति—

**एवं न जायते चित्तमेवं धर्मा अजाः स्मृताः ॥**
**एवमेव विजानन्तो न पतन्ति विपर्यये ॥ ४६ ॥**

एवमिति ॥ एवं प्रतिबिम्बानां बिम्बमात्रत्ववच्चित्प्रतिबिम्बानां जीवानां बिम्बभूतब्रह्ममात्रत्वाद्धर्मा आत्मनोऽजाः स्मृता ब्रह्मविद्भिरित्याह ॥ एवमिति ॥ धर्मा इति बहुवचनं देहभेदानुविधायित्वादद्वयस्यैवोपचारतः । एवमेव यथोक्तं विज्ञानं जात्यादिरहितमद्वयमात्मतत्त्वं विजानन्तस्त्यक्तबाह्यैषणाः पुनर्न पतन्त्यविद्याध्वान्तसागरे विपर्यये । तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्युक्तज्ञानफलमाह ॥ एवमिति ॥ ४६ ॥

विज्ञानमचलमेव जात्याभासं चलाभासं चेत्युक्तम् । तदिदानीं दृष्टान्तेन प्रपञ्चयति–

**ऋजुवक्रादिकाभासमलातस्पन्दितं यथा ॥**
**ग्रहणग्राहकाभासं विज्ञानं स्पन्दितं तथा ॥ ४७ ॥**

ऋजुवक्रादिकेति ॥ यथा हि लोके ऋजुवक्रादिप्रकाराभासमलातस्पन्दितमुल्काचलनं तथा ग्रहणग्राहकाभासं विषयिविषयाभासं विज्ञानं स्पन्दितमविद्यया । न ह्यचलस्य विज्ञानस्य स्पन्दनमस्ति । अजाचलमिति ह्युक्तम् ॥ ४७ ॥

विज्ञानं शान्तमित्युक्तं दृष्टान्तेन स्पष्टयति—

**अस्पन्दमानमलातमनाभासमजं यथा ॥**
**अस्पन्दमानं विज्ञानमनाभासमजं तथा ॥ ४८ ॥**

अस्पन्दमानमिति ॥ स्पन्दनवर्जितं तदेवालातमृज्वाद्याकारेणाऽजायमानमनाभासमजं यथा तथाऽविद्यया स्पन्दमानमविद्योपरमे अस्पन्दमानं जात्याद्याकारेणानाभासमजमचलं भविष्यतीत्यर्थः ॥४८॥

अलातदृष्टान्ते कथम् ऋजुवक्रादीनामसत्त्वमित्याशङ्कायां निरूपणासहत्वादित्याह—

**अलाते स्पन्दमाने वै नाऽऽभासा अन्यतो भुवः ॥**
**न ततोऽन्यत्र निस्पन्दान्नालातं प्रविशन्ति ते ॥४९॥**

अलात इति ॥ यदा खल्वलातं स्पन्दमानमवतिष्ठते तदा तस्मिन्

अन्यतो देशान्तरादागत्याभासा भवन्तीति न शक्यं वक्तुम्। ऋजुवक्राद्याभासानां देशान्तरागमनस्यानवगमात्। यदा तदेवालातं निःस्पन्दनंस्पन्दवर्जितं वर्तते तदा ततस्तस्मान्निःस्पन्दादलातादन्यत्राभासा भवन्तीत्यपि न युक्तं वक्तुम्। अनुपलम्भाविशेषात्। न चाभासास्तस्मिन्नेव लीयन्ते। तदनुपादानत्वात्। यदि हि स्पन्दननिमित्तमलातमुपादानं तदा निमित्ताभावमात्रान्नैमित्तिकाभावादर्शनाद् ऋजुवक्राद्याकाराः स्पन्दनाभावेऽप्यलाते भवेयुरित्यर्थः॥ ४९॥

ऋजुवक्राद्याभासानां दृष्टान्ते निर्गमनप्रवेशयोरसम्भवं साधयति-

**न निर्गता अलातात्ते द्रव्यत्वाभावयोगतः॥**
**विज्ञानेऽपि तथैव स्युराभासस्याविशेषतः॥ ५०॥**

नेत्यादिना॥ न निर्गता अलातात्ते आभासा गृहादिव द्रव्यत्वाभावयोगतः। द्रव्यस्य भावो द्रव्यत्वं, तदभावो द्रव्यत्वाभावस्तस्माद् द्रव्यत्वाभावयुक्तेर्वस्तुत्वाभावात्। वस्तुनो हि प्रवेशादि संभवति, नावस्तुनः। विज्ञानेऽपि जात्याद्याभासास्तथैव स्युर्मिथ्यैव भवेयुरित्यर्थः। ऋजुवक्राद्याकारेषु जन्माद्याकारेषु चाभासत्वस्य तुल्यत्वादित्याह॥ आभासस्येति॥ ५०॥

तुल्यत्वं सार्द्धेनोत्तरश्लोकेन साधयति-

**विज्ञाने स्पन्दमाने वै नाऽऽभासा अन्यतो भुवः॥**
**न ततोऽन्यत्र निस्पन्दान्न विज्ञानं विशन्ति ते॥५१॥**
**न निर्गतास्ते विज्ञानाद् द्रव्यत्वाभावयोगतः॥**
**कार्यकारणताभावाद्यतोऽचिन्त्याः सदैव ते॥५२॥**

विज्ञान इति॥ न हि तस्मिन् विज्ञाने यथाकथञ्चिच्चलनवति ततोऽन्यस्मादागत्य जन्माद्याभासास्तत्र भवितुमर्हन्ति। तथा प्रथाभावात्। न च तस्माद्विज्ञानादचलतयाऽवस्थितादन्यत्राभासा भवितुमुत्सहन्ते। प्रतीत्यभावस्य तुल्यत्वात्। नाऽपि तदेव विज्ञानं प्रविशन्ति। तस्य केवलस्य तदुपादानत्वानुपगमात्। न च ते विज्ञाने प्रवेष्टुं समर्थास्ततो निर्गन्तुं वा पारयन्ति। तेषामवस्तुत्वादित्यर्थः। अलातेन समं सर्वं विज्ञानस्य सदा अचलत्वं तु विज्ञानस्य विशेषश्चेत्तर्हि तत्र जात्याद्याभासा हेत्वभावान्न स्युरित्याशङ्क्यान्तिमार्द्धेन

परिहरति ॥ कार्येति ॥ यत आभासानां विज्ञानस्य च कार्यकारणतया दुर्वचनत्वादाभासाः सर्वदैव निरूपयितुमशक्यत्वादितो मायामयाः सन्तो मिथ्यैव भवन्तीत्यर्थः ॥ ५१ ॥ ५२ ॥

यदुक्तं कार्यकारणताभावादिति। तदिदानीमुपपादयितुमुपक्रमते–

द्रव्यं द्रव्यस्य हेतुः स्यादन्यदन्यस्य चैव हि ॥
द्रव्यत्वमन्यभावो वा धर्माणां नोपपद्यते ॥ ५३ ॥

द्रव्यमिति ॥ अजमेकमात्मतत्त्वमिति स्थितम्। तत्र यैरपि कार्यकारणभावः कल्प्यते तेषामवयवद्रव्यमवयविद्रव्यस्यान्यस्यावयविगुणस्य शुक्लादेरन्यदवयवगुणोऽशुक्लादि हेतुः कारणं स्यात्। न च द्रव्यत्वं धर्माणामात्मनामुपपद्यते, अन्यत्वं वा कुतश्चिद्येनान्यस्य कारणत्वं कार्यत्वं च प्रतिपद्यते। अतोऽद्रव्यत्वादनन्यत्वाच्च न कस्यचित् कार्यं कारणं चात्मेत्यर्थः ॥ ५३ ॥

एवमात्मरूपस्य निर्विकारत्वाद् द्रव्यत्वस्याप्रसिद्धत्वान्न चित्तजा बाह्या घटादयो धर्मा, नापि बाह्यधर्मजं चित्तं, विज्ञानस्वरूपाभासमात्रत्वात् सर्वधर्माणामित्याह–

एवं न चित्तजा धर्माश्चित्तं वाऽपि न धर्मजम् ॥
एवं हेतुफलाजातिं प्रविशन्ति मनीषिणः ॥ ५४ ॥

एवमिति ॥ यश्च धर्मादेः शरीरादेश्च कार्यकारणभावो विद्वद्दृष्ट्या पुरस्तान्निरस्तः सोऽप्यन्यत्वाभावे, न सिद्ध्यतीत्याह ॥ एवमिति ॥ न हेतोः फलं जायते, नाऽपि फलाद्धेतुरिति हेतुफलयोरजातिं हेतुफलाजातिं प्रविशन्त्यध्यवस्यन्त्यात्मनि हेतुफलयोरभावमेव प्रतिपद्यन्ते ब्रह्मविद इत्यर्थः ॥ ५४ ॥

ये पुनर्हेतुफलयोरभिनिविष्टास्तेषां किं स्यादित्युच्यते–

यावद्धेतुफलावेशस्तावद्धेतुफलोद्भवः ॥
क्षीणे हेतुफलावेशे नास्ति हेतुफलोद्भवः ॥५५॥

यावदिति ॥ धर्माधर्माख्यस्याहं कर्ता, मम धर्माधर्मौ, तत्फलं कालान्तरे क्वचित् प्राणिनिकाये जातो भोक्ष्य इति यावद्धेतुफलयोरावेशो हेतुफलाग्रह आत्मन्यारोपणं, तच्चित्तता। तावद्धेतुफलयोरुद्भवो, धर्माधर्मयोस्तत्फलस्य चानुच्छेदेन प्रवृत्तिः। यदा पुनर्मन्त्रौ-

त्वधिवीर्येणेव ग्रहावेशो यथोक्ताऽद्वैतदर्शनेनाविद्योद्भवहेतुफलावेशो-ऽपक्षीणो भवति तदा तस्मिन् क्षीणे नास्ति हेतुफलोद्भवः । कारणा-भावादित्यर्थः ॥ ५५ ॥

अभिनिवेशवशाद्धेतुफलोद्भवे किं भवति, तदाह—

**यावद्धेतुफलावेशः संसारस्तावदायतः ॥**
**क्षीणे हेतुफलावेशे संसारं न प्रपद्यते ॥ ५६ ॥**

यावदिति ॥ सम्यग्दर्शनेन हेतुफलावेशो यावन्न निवर्तते संसार-स्तावदायतो दीर्घो भवतीत्यर्थः । अभिनिवेशनिवृत्त्या तदनुद्भवे वा किं स्यादित्याशङ्क्य क्षीणे पुनर्हेतुफलावेशे संसारं न प्रपद्यते । कारणा-ऽभिनिवेशाभावादित्याह ॥ क्षीण इति ॥ ५६ ॥

नन्वजादात्मनोऽन्यन्नास्त्येव । तत् कथं हेतुफलयोः संसारस्य चोत्पत्तिविनाशावुच्येते इत्याशङ्क्य संवृत्या संवरणं संवृतिरविद्या-विषयो लौकिको व्यवहारः । तया संवृत्या जायते सर्वमित्याह—

**संवृत्या जायते सर्वं शाश्वतं नास्ति तेन वै ॥**
**सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै ॥ ५७ ॥**

संवृत्येति ॥ तेनाविद्याविषये शाश्वतं नित्यं नास्ति वै । अत उत्पत्तिविनाशलक्षणः संसार आयत इत्युच्यत इत्याह ॥ शाश्वत-मिति ॥ परमार्थसद्भावेन त्वजं सर्वमात्मैव यस्मादतो जात्याद्यभा-वादुच्छेदस्तेन नास्ति वै कस्यचिद्धेतुफलादेरित्याह ॥ सद्भावेनेति ॥ तथाच, परमार्थकूटस्थाऽऽत्मदर्शनं मूढदृष्ट्या व्यावहारिकजन्मादि-वचनेनाविरुद्धमिति भावः ॥ ५७ ॥

संवृत्या जायते सर्वमित्युक्तम् । तदिदानीं प्रपञ्चयति—

**धर्मा य इति जायन्ते जायन्ते ते न तत्त्वतः ॥**
**जन्म मायोपमं तेषां सा च माया न विद्यते ॥५८॥**

धर्मा इति ॥ येऽप्यात्मानोऽन्ये च धर्मा जायन्ते इति शब्दवाच्य-संवृत्यैव धर्मा जायन्ते, न तत्त्वतः परमार्थतो जायन्ते । यत्पुनस्तत्सं-वृत्या जन्म तेषां यथोक्तानाम् । यथा मायया जन्म तथा तन्मायोपमं प्रत्येतव्यं जन्म, सा च माया न विद्यते । मायेत्यविद्यमानस्याख्येत्य-भिप्रायः ॥ ५८ ॥

कथं मायोपमं तेषां धर्माणां जन्मेति दृष्टान्तावष्टम्भेन साधयति—

यथा मायामयाद्बीजाज्जायते तन्मयोऽङ्कुरः ॥
नाऽसौ नित्यो न चोच्छेदी तद्वद्धर्मेषु योजना ॥५९॥

यथेति ॥ यथा मायामयादाम्रादिबीजाज्जायते तन्मयो मायामयोऽङ्कुरः । नाऽसावङ्कुरो नित्यो, न चोच्छेदी विनाशी वा । अभूतत्वात् । एवं धर्मेषु जन्मनाशादियोजना युक्तिर्न तु परमार्थतो धर्माणां जन्म नाशो वा युज्यत इत्यर्थः ॥ ५९ ॥

यदुक्तं सद्भावेन ह्यजं सर्वमिति तत् प्रपञ्चयति—

नाजेषु सर्वधर्मेषु शाश्वताशाश्वताभिधा ॥
यत्र वर्णा न वर्तन्ते विवेकस्तत्र नोच्यते ॥ ६० ॥

नेति ॥ परमार्थतस्त्वात्मस्वजेषु नित्यैकरसविज्ञप्तिमात्रसत्ताकेषु, शाश्वतोऽशाश्वत इति वा नाभिधा नाभिधानं प्रवर्तत इत्यर्थः । आत्मनि नित्यानित्यकथा नावतरतीत्यत्र हेतुमाह ॥ यत्रेति ॥ वर्ण्यन्ते यैरर्थास्ते वर्णाः शब्दा यत्र येषु न प्रवर्तन्तेऽभिधातुं प्रकाशयितुमज इदमेवमिति विवेको विविक्तता, तत्र नित्योऽनित्य इति नोच्यते । यतो वाचो निवर्तन्ते इति श्रुतेरित्यर्थः ॥ ६० ॥

यथा स्वप्ने द्वयाभासं चित्तं चलति मायया ॥
तथा जाग्रद्द्वयाभासं चित्तं चलति मायया ॥६१॥

आत्मनः शब्दागोचरत्वे कथमसौ व्याख्यातृभिः शब्दैरेव प्रतिपाद्यतामायातीत्याशङ्क्य चित्तस्पन्दनमात्रमविचारसुन्दरं प्रतिपाद्यप्रतिपादकरूपं द्वैतमिति दृष्टान्तमाह ॥ यथेति ॥ ६१ ॥

स्वप्ने प्रतिपाद्यप्रतिपादकद्वैतस्य चित्तस्पन्दितमात्रत्वेऽपि जागरिते कथं तथा स्यादित्याशङ्क्याह—

अद्वयं च द्वयाभासं चित्तं स्वप्ने न संशयः ॥
अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः ॥ ६२ ॥

अद्वयं चेति ॥ तृतीये ग्राह्यग्राहकात्मकस्य जगतोऽद्वयात्ममात्रत्वप्रतिपादनार्थौ श्लोकावत्र तु प्रतिपाद्यप्रतिपादकात्मकस्य तस्य मनोमात्रत्वार्थावित्यपौनरुक्त्यम् ॥ ६२ ॥

वाचा गोचरीभूतस्यासत्त्वे हेत्वन्तरमाचक्षाणो दृष्टान्तमाचष्टे—

स्वप्नदृक् प्रचरन् स्वप्ने दिक्षु वै दशसु स्थितान् ॥
अण्डजान्स्वेदजान्वाऽपिजीवान्पश्यतियान्सदा॥६३
स्वप्नदृक्चित्तदृश्यास्ते न विद्यन्ते ततः पृथक् ॥
तथा तद्दृश्यमेवेदं स्वप्नदृक्चित्तमिष्यते ॥ ६४ ॥

स्वप्नदृगिति ॥ स्वप्नान् पश्यतीति स्वप्नदृक् । प्रचरत् पर्यटत् स्वप्ने स्वप्न-स्थाने दिक्षु वै दशसु स्थितान् वर्तमानान् जीवान् प्राणिनोऽण्डजान् स्वेदजान् वा यान् सदा पश्यति स्वप्नदृशश्चित्तं स्वप्नदृक्चित्तम् । तेन दृश्यास्ते जीवास्तस्मात् स्वप्नदृक्चित्तात् पृथग् न विद्यन्ते न सन्तीत्यर्थः । तर्हि द्रष्टा चित्तं चेति द्वयं स्वप्ने स्वीकृतं ? नेत्याह ॥ तथेति ॥ तदपि स्वप्नदृक्चित्तमिदं तद्दृश्यमेव । तेन स्वप्नदृशा दृश्यं तद्दृश्यम् । अतः स्वप्नस्थस्य चित्तस्य स्वप्नदृग्व्यतिरेकेण सत्त्वाभावान्न स्वप्ने द्वैविध्यकारणतेत्यर्थः ॥ ६३ ॥ ६४ ॥

दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति—

चरञ्जागरिते जाग्रद् दिक्षु वै दशसु स्थितान् ॥
अण्डजान्स्वेदजान्वाऽपिजीवान्पश्यतियान्सदा॥६५
जाग्रच्चित्तेक्षणीयास्ते न विद्यन्ते ततः पृथक् ॥
तथा तद्दृश्यमेवेदं जाग्रतश्चित्तमिष्यते ॥ ६६ ॥

चरन्नित्यादिना ॥ जाग्रतो दृश्या जीवास्तच्चित्ताऽव्यतिरिक्ताः, चित्तेक्षणीयत्वात् स्वप्नदृक्चित्तेक्षणीयजीववत् । तच्च जीवेक्षणात्मकं चित्तं द्रष्टुरव्यतिरिक्तं, द्रष्टृदृश्यत्वात् स्वप्नचित्तवत् । तत्र जीव-शब्देन कार्यकरणसङ्घाता गृह्यन्ते । चेतनानां दृश्यत्वाभावादिति द्रष्टव्यम् । अक्षरव्याख्यानं तु दृष्टान्तव्याख्यानेनैव स्पष्टत्वान्न पृथगऽपेक्षितमिति ध्येयम् ॥ ६५ ॥ ६६ ॥

दृश्यदर्शनव्यतिरेकग्राहकप्रमाणप्रतिहतं हेतुद्वयमित्याशङ्क्याह—

उभे ह्यन्योन्यदृश्ये ते किं तदस्तीति नोच्यते ॥
लक्षणाशून्यमुभयं तन्मतेनैव गृह्यते ॥ ६७ ॥

उभे हीति ॥ ते हि दृश्यदर्शने उभे परस्परापेक्षसिद्धिके । दृश्ये

सिद्धे, तदवच्छिन्नं दर्शनं सिद्ध्यति । तस्य च सिद्धौ, तदवच्छिन्नं दृश्यं सिद्ध्यतीत्यन्योन्याश्रयान्न दृश्यं दर्शनं वा सिद्ध्यत्यतो विभागाऽवगाहिप्रमाणाभावान्न तद्बाधो हेतुद्वयस्येत्यर्थः। किञ्च सम्भावनायां प्रमाणप्रवृत्तिर्वक्तव्या । न च दृश्यदर्शनयोरन्यतरस्यापि नैरपेक्ष्येण विभागाऽवगाहिप्रमा सम्भवति । अन्योन्याश्रयदोषात् । तथाच परस्परपुरस्कारेण सिद्ध्येदुभयं कल्पितमेव स्यादिति मत्वाह ॥ किं तदिति ॥ तद्दृश्यं दर्शनं वा किमस्तीति पृष्टे विवेकिना नास्तीत्येवोच्यते । प्रागुक्तदोषादित्यर्थः । किञ्च प्रामाणिकस्यैव प्रामाणिको भेदः सम्भवति । न च दृश्यदर्शनयोः स्वरूपे प्रमाणमस्तीत्याह ॥ लक्षणेति ॥ लक्ष्यतेऽनयेति लक्षणा प्रमाणम् । प्रमाणशून्यमुभयं चित्तं चैत्यं द्वयामित्यर्थः । कथं तर्हि प्रमाणप्रमेयविभागो वादिभिर्गृह्यते । तन्मतेन तच्चित्ततादोषेणैव तद् गृह्यते इत्याह ॥ तन्मतेनेति ॥ ६७ ॥

दृश्यानामण्डजादीनां दर्शनातिरिक्तानामसत्त्वानुमानस्य भेदग्राहकप्रमाणवादं परिहृत्य दर्शनातिरेकेण तेषामसत्त्वे जन्मादिप्रत्ययबाधः स्यादित्याशङ्क्य परिहरति–

यथा स्वप्नमयो जीवो जायते म्रियतेऽपि च ॥
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥६८॥
यथा मायामयो जीवो जायते म्रियतेऽपि च ॥
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥६९॥
यथा निर्मितको जीवो जायते म्रियतेऽपि वा ॥
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥७०॥

यथेत्यादिना॥ मायामयो मायाविना कृतो निर्मितको मन्त्रौषध्यादिभिर्निष्पादितः । स्वप्नमायानिर्मितका अण्डजादयो जीवा यथा तेषां सत्त्वाभावेऽपि जायन्ते म्रियन्ते इति व्यवहृतिस्तथा मनुष्यादिलक्षणा अविद्यमाना एव चित्तविकल्पनामात्रा, जायन्ते म्रियन्त इति प्रत्ययो भवत्येवाऽतो नानुमानबाधकता तस्येत्यर्थः॥ ६८ ॥ ६९ ॥७०॥

यस्तु जन्मादिसत्त्वमिति मन्यते, तं प्रति प्रागुक्तं स्मारयति–

न कश्चिज्जायते जीवः संभवोऽस्य न विद्यते ॥
एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते ॥ ७१ ॥

न कश्चिदिति ॥ व्यवहारसत्यविषये जीवानां जन्ममरणादिः स्वप्नादिजीववदित्युक्तम् । उत्तमं तु परमार्थसत्यं नकश्चिज्जायते जीव इति तृतीयान्ते व्याख्यातम् ॥ ७१ ॥

संवेदनस्य कल्पितदृश्योपहितरूपेण दृश्यत्वान्न द्रष्टुर्व्यतिरेकेण सत्त्वमिति स्वप्नदृष्टान्तेनोक्तम् । इदानीं तत्त्वतः संवेदनस्य विषयसम्बन्धाभावादात्मैव संवेदनमित्याह—

चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद् द्वयम् ॥
चित्तं निर्विषयं नित्यमसङ्गं तेन कीर्तितम् ॥ ७२ ॥

चित्तेति ॥ सर्वं ग्राह्यग्राहकवच्चित्तस्पन्दितमेव द्वयं चित्तं परमार्थत आत्मैवेति निर्विषयम् । तेन निर्विषयत्वेन नित्यमसङ्गं कीर्तितं ब्रह्मनिष्ठैः । असङ्गो ह्ययं पुरुष इति श्रवणात् । सविषयस्य हि विषये सङ्गः । निर्विषयत्वाच्चित्तमसङ्गमित्यर्थः ॥ ७२ ॥

निर्विषयत्वेन चित्तस्यासङ्गत्वं सङ्गीतम् । तदसङ्गतम् । शास्त्रादेर्विषयस्य सत्त्वादित्याशङ्क्याह—

योऽस्ति कल्पितसंवृत्त्या परमार्थेन नास्त्यसौ ॥
परतन्त्राभिसंवृत्त्या स्यान्नास्ति परमार्थतः ॥ ७३ ॥

योऽस्तीति ॥ यः पदार्थः शास्त्रादिर्विद्यते स कल्पितसंवृत्त्या । कल्पिता च सा परमार्थप्रतिपत्त्युपायत्वेन संवृतिश्च । तथा योऽस्ति परमार्थेन नास्त्यसौ न विद्यते इत्युक्तमित्यर्थः । ननु परमार्थतो वैशेषिकाः षट्पदार्थान् द्रव्यादिसमवायान्तानातिष्ठन्ते । तथाच चित्तस्य कथमसङ्गत्वम् ? तत्राह ॥ परेति ॥ यश्च परतन्त्राभिसंवृत्त्या परशास्त्रव्यवहारेण स्यात् पदार्थः स परमार्थतो निरूप्यमाणे नास्त्येव । तस्माद्युक्तम्, असङ्गं तेन कीर्तितमिति ॥ ७३ ॥

शास्त्रादिभेदकल्पनायाः संवृतिसिद्धत्वे तदधीनात्मन्यजत्वकल्पनाऽपि संवृतिसिद्धैव स्यादित्याशङ्क्याङ्गीकरोति—

अजः कल्पितसंवृत्त्या परमार्थेन नाप्यजः ॥
परतन्त्राभिनिष्पत्त्या संवृत्त्या जायते तु सः ॥ ७४ ॥

अज इति ॥ शास्त्रादिकल्पितसंवृत्यैवाज इत्युच्यते । परमार्थेन नाऽप्यजः । कैवल्यावस्थायां तद्व्यवहाराभावादित्यर्थः । कल्पितमात्मन्यजत्वमित्यत्र हेतुमाह ॥ परतन्त्रेति ॥ यस्मात् परतन्त्राभिनिष्पत्त्या परशास्त्रसिद्धिं परिणामकल्पनामपेक्ष्य तन्निषेधेन योऽज इत्युक्तः स संवृत्या जायते । अतोऽज इतीयमपि कल्पना परमार्थविषये नैव क्रमत इत्यर्थः ॥ ७४ ॥

ननु ज्ञानस्य कल्पितशास्त्रादिजन्यत्वे मिथ्यात्वान्नापुनरावृत्तिफलसाधनत्वं, तत्राह—

अभूताभिनिवेशोऽस्ति द्वयं तत्र न विद्यते ॥
द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायते ॥ ७५ ॥

अभूतेति॥यस्मादसद् द्वैतविषयस्तस्मादसत्यभूते द्वैतेऽभिनिवेशोऽस्ति केवलमभिनिवेश आग्रहमात्रं द्वयं तत्र न विद्यते । मिथ्याऽभिनिवेशमात्रं च जन्मनः कारणं यस्मात्तस्माद् द्वयाभावं बुद्ध्वा निर्निमित्तो निवृत्तमिथ्याद्वयाभिनिवेशो यः स न जायते।मिथ्योपायस्याऽपि सत्यत्वसाधनत्वं दृष्टमित्यर्थः ॥ ७५ ॥

निर्निमित्तो न जायते इत्युक्तम् । तदेतत् प्रपञ्चयति—

यदा न लभते हेतूनुत्तमाधममध्यमान् ॥
तदा न जायते चित्तं हेत्वभावे फलं कुतः ॥ ७६ ॥

यदेति॥जात्याश्रमविहिताः फलतृष्णारहितैरधिकारिभिरनुष्ठीयमाना धर्माः देवत्वाद्युत्कृष्टजन्महेतव उत्तमाः । प्रधानधर्मा अधर्मव्यामिश्रा मनुष्यत्वादिमध्यमयोनिप्राप्त्यर्था मध्यमाः । तिर्यगाद्यधमजन्मनिमित्ता अधर्मलक्षणाः प्रवृत्तिविशेषाश्चाधमाः । तानुत्तममध्यमाऽधमान् अविद्यापरिकल्पितान् यदा एकमेवाद्वितीयमात्मतत्त्वं सर्वकल्पनावर्जितं जानन्न लभते न पश्यति यथा बालैर्दृश्यमानं गगने मलं विवेकी न पश्यति तद्वत् तदा न जायते नोत्पद्यते चित्तं देवाद्याकारैरुत्तमाधममध्यमफलरूपेण । न ह्यसति हेतौ फलमुत्पद्यते, बीजाद्यभाव इव सस्यादिरित्यर्थः ॥ ७६ ॥

तदा न जायते चित्तमिति कालपरिच्छेदप्रतीतेरागन्तुकत्वमाशङ्क्य परिहरति—

**अनिमित्तस्य चित्तस्य याऽनुत्पत्तिः समाऽद्वया ॥**
**अजातस्यैव सर्वस्य चित्तदृश्यं हि तद्यतः ॥ ७७ ॥**

अनिमित्तस्येति ॥ परमार्थदर्शनेन निरस्तधर्माधर्माख्योत्पत्तिनिमित्तस्यानिमित्तस्य चित्तस्याऽजातस्यैव सर्वस्याद्वयस्य या मोक्षाख्याऽनुत्पत्तिः सा सर्वदा सर्वावस्थासु समा निर्विशेषाद्वया च भ्रमनिवृत्त्यऽपेक्षया तु तदा न जायत इत्युक्तमित्यर्थः। यस्मात् प्रागपि विज्ञानाच्चित्तदृश्यं तद्द्वयं जन्म च तस्मात् पूर्वमप्यजातस्यैवानुत्पन्नस्य च्चित्तस्य सर्वस्याद्वयस्य सर्वदा समाऽद्वयैवानुत्पत्तिर्न पुनः कदाचिद् भवति कदाचिद् वा न भवति, सर्वदैकरूपैवेति हेतुमाह ॥ अजातस्येति ॥ ७७ ॥

द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायत इत्युक्तम्। तदिदानीं प्रपञ्चयति–

**बुद्ध्वाऽनिमित्ततां सत्यां हेतुं पृथगनाप्नुवन् ॥**
**वीतशोकं तथाऽकाममभयं पदमश्नुते ॥ ७८ ॥**

बुद्ध्वेति ॥ द्वैतस्य दृश्यत्वादिना सर्पवत् कल्पितत्वादेव जन्मनिमित्तस्याभावादनिमित्ततां च सत्यां द्वैताभावोपलक्षितां परमार्थरूपां बुद्ध्वा देवादियोनिप्राप्तौ धर्मादिहेतुं पृथगसाङ्कर्येणानाप्नुवन्ननुपाददानस्त्यक्तबाह्यैषणः सन् यदा विद्वानवतिष्ठते तदा कामशोकादिवर्जितमविद्यारहितमभयं पदमश्नुते,न पुनर्जायत इत्यर्थः॥७८

यथोक्तपदप्राप्तिः सदाऽस्तीत्याशङ्क्याह–

**अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्तते ॥**
**वस्त्वभावं स बुद्ध्वैव निःसङ्गं विनिवर्तते ॥ ७९ ॥**

अभूतेति ॥ असति द्वये द्वयाऽस्तित्वनिश्चयो भूताभिनिवेशस्तस्मादविद्याव्यामोहरूपाद्धि यस्मात् सदृशे तदनुरूपे तच्चित्तं प्रवर्त्तते। तस्याभिनिवेशविषयस्य द्वयस्य वस्तुनोऽभावं यदा बुद्धवांस्तदा तस्मान्निःसङ्गं निरपेक्षं सद्विनिवर्तते। अभूताभिनिवेशविषयात् तदैव पदमश्नुते इति व्यवहृतिरित्यर्थः ॥ ७९ ॥

अभयं पदमश्नुत इत्यत्र हेतुमाह–

निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थितिः ॥
विषयः स हि बुद्धानां तत्साम्यमजमद्वयम् ॥ ८० ॥

निवृत्तस्येति ॥ निवृत्तस्य द्वैतविषयाद्विषयान्तरे चाप्रवृत्तस्याऽभावदर्शनेन चित्तस्य निश्चला चलनवर्जिता ब्रह्मस्वरूपैव तदा स्थितिश्चित्तस्येत्यर्थः । विद्वदनुभवैकगम्यत्वादशेषकल्पनातीतत्वाच्च सिद्धं मोक्षस्याभयादिरूपत्वमित्याह॥विषय इति॥ यैषा ब्रह्मस्वरूपा स्थितिश्चित्तस्याऽद्वयंविज्ञानैकरसघनलक्षणा । स हि यस्माद्विषयो गोचरः परमार्थदर्शिनां बुद्धानां तस्मात् तत्साम्यं परं निर्विशेषमजमद्वयं चेत्यर्थः ॥ ८० ॥

यो मोक्षो विदुषां विषयो दर्शितस्तमेव पुनर्विशिनष्टि—

अजमनिद्रमस्वप्नं प्रभातं भवति स्वयम् ॥
सकृद्विभातो ह्येवैष धर्मो धातुः स्वभावतः ॥ ८१ ॥

अजमिति॥ स्वयमेव प्रभातत्वे हेतुमाह ॥ सकृदिति॥ कल्पितस्य सर्वस्य धारणाद्धर्मो, नाऽसौ कथमपि परतन्त्रो भवितुमर्हति । अनवस्थानात् । अतः स्वयञ्ज्योतिरित्याह ॥ धर्मा इति ॥ किञ्च, धीयते सर्वं निक्षिप्यते सुषुप्त्यादौ अस्मिन्निति धातुरात्मोच्यते । तथाच सर्वस्य ज्ञानसाधनस्योपसंहारेऽपि सुषुप्त्यादौ साक्षितयात्मनः सिद्धेः स्वयञ्ज्योतिष्ट्वमेष्टव्यमित्याह, धातुरिति॥ किञ्चात्मत्वादेवात्मनः स्वयञ्ज्योतिष्ट्वमन्यथा घटवदनात्मत्वप्रसङ्गादित्याह॥ स्वभावत इति ॥८१॥

आत्मा चेदुक्तलक्षणो व्यवस्थितस्तर्हि किमित्यसौ श्रुत्याचार्योपदिष्टस्तथैव सर्वैर्न गृह्यते, तत्राह—

सुखमाव्रियते नित्यं दुःखं विव्रियते सदा ॥
यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ ॥ ८२ ॥

सुखमिति ॥ यस्माद्यस्य कस्यचिद् द्वयवस्तुनो धर्मस्य ग्रहणावेशेन मिथ्याभिनिविष्टतया सुखमाव्रियते अनायासेनाच्छाद्यते, दुःखं च विव्रियते प्रकटीक्रियते । भगवानसावात्माऽद्वयो देवः । अतो वेदान्तैराचार्यैश्च बहुश उच्यमानोऽपि नैव ज्ञातुं शक्यः । आश्चर्यो वक्ता कुशलोऽस्य लब्धेति श्रुतेरित्यर्थः ॥ ८२ ॥

परीक्षकाभिनिवेशानामप्यात्मावरणत्वे सति, लौकिकपुरुषाभि-

निवेशानां तदावरणत्वं किमु वक्तव्यमिति साधयति—

**अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः॥**
**चलस्थिरोभयाभावैरावृणोत्येव बालिशः ॥ ८३ ॥**

अस्तीत्यादिना ॥ प्रमाता देहादिव्यतिरिक्तोऽस्तीत्याद्यो वैशेषिकादिपक्षः १। देहादिव्यतिरिक्तोऽपि नाऽसौ बुद्धेर्व्यतिरिच्यते, क्षणिकस्य ज्ञानस्यैवात्मत्वादिति द्वितीयो विज्ञानवादिपक्षः २। अस्ति नास्तीति तृतीयो दिगम्बरपक्षः ३। नास्ति नास्तीत्यन्तं शून्यवादी ४। तत्रास्ति भावो योऽयं प्रमातोक्तः स चलः सविशेषः सन् परिणामिघटाद्यनित्यविलक्षणत्वाद् देहाद्यतिरिक्तोऽपि प्रमाता बुद्ध्यतिरिक्तो नास्तीति। यो नास्ति भावः स स्थिरो निर्विशेषत्वात्। उभयं चलस्थिरविषयत्वात्। सदसद्भावोऽभावोऽत्यन्ताभावः। प्रकारचतुष्टयस्यापि तैरेतैश्चलस्थिरोभयाभावैः सदसदादिवादी सर्वोऽपि भगवन्तमावृणोत्येव। बालिशः अविवेकी। यद्यपि पण्डितो, बालिश एव। परमार्थतत्त्वानवबोधात्। किमुत स्वभावमूढा जना इत्यभिप्रायः॥८३॥

आत्मनो यदावरणमुक्तं तदुपसंहरति—

**कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदाऽऽवृतः॥**
**भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक् ॥ ८४ ॥**

कोट्य इति ॥ यासां कोटीनां परीक्षकपरिकल्पितनिर्णयानां ग्रहैरभिनिवेशविशेषैरात्मा सदा वृतस्ताः खल्वेताश्चतस्रः कोटयः सन्ति। तथाचात्मनो न यथावत् प्रथनमित्यर्थः। यदि सदाऽऽत्मा समावृतो, न तर्हि तस्य ज्ञानं, ज्ञाने वा नास्ति नैराकाङ्क्ष्यं; ज्ञातव्यान्तरपरिशेषादित्याशङ्क्याह ॥ भगवानिति ॥ आत्मा ह्याभिरस्ति नास्तीत्यादिकोटिभिश्चतसृभिरप्यस्पृष्टोऽस्त्यादिकल्पनावर्जितो येन मुनिना दृष्टो ज्ञातो वेदान्ते औपनिषदः पुरुषः स सर्वज्ञो ज्ञातव्यान्तरमपश्यन् परमार्थपण्डितो निराकाङ्क्षो भवतीत्यर्थः॥ ८४ ॥

ज्ञानवतोऽपि यावज्जीवादिश्रुतिवशादग्निहोत्रादि कर्तव्यमित्याशङ्क्याह—

**प्राप्य सर्वज्ञतां कृत्स्नां ब्राह्मण्यं पदमद्वयम् ॥**
**अनापन्नादिमध्यान्तं किमतः परमीहते ॥ ८५ ॥**

प्राप्येति ॥ तां यथोक्तां कृत्स्नां समस्तां सर्वज्ञतां ब्राह्मण्यं पदं मुख्यब्राह्मणभावमनापन्नादिमध्यान्तम् । आदिमध्यान्ता उत्पत्तिस्थिति-लया अनापन्ना अप्राप्ता यस्याऽद्वयस्य न विद्यन्ते तदनापन्नादिमध्या-न्तम् । तदेव प्राप्य लब्ध्वा किमतः परमस्मादात्मलाभादूर्ध्वमीहते चेष्टते निष्प्रयोजनम् । नैव तस्य कृतेनार्थ इत्यादिस्मरणादित्यर्थः॥८५॥

यावज्जीवादिश्रुतेरविद्वद्विषयत्वाद्विदुषो नाग्निहोत्रादि कर्तव्यमि-त्युक्तम् । इदानीं तस्यापि नियोगतोऽस्ति कर्त्तव्यमित्याशङ्क्याह–

**विप्राणां विनयो ह्येष शमः प्राकृत उच्यते ॥**
**दमः प्रकृतिदान्तत्वादेवं विद्वाञ्छमं व्रजेत् ॥ ८६ ॥**

विप्राणामिति॥ब्रह्मविदां ब्राह्मणानामेष विनयो विनीतत्वं स्वाभाविकं य-देतदात्मरूपेणावस्थानम् । शमोऽप्येष एव प्राकृतः स्वाभाविकोऽकृतक उच्यते । दमोऽप्येष एव प्रकृतिदान्तत्वात् स्वभावत एव चोप-शान्तरूपत्वाद् ब्रह्मण एवं यथोक्तं स्वभावोपशान्तं ब्रह्म विद्वान् शम-मुपशान्तिं स्वाभाविकीं ब्रह्मरूपां व्रजेद् ब्रह्मस्वरूपेणावतिष्ठते । अतो विदुषो न नियोगगोचरतेत्यर्थः ॥ ८६ ॥

परमतनिराकरणमुखेनात्मतत्त्वमवधारितम् । अधुना स्वप्रक्रिय-याऽवस्थाद्वयोपन्यासमुखेनापि तदवधारयितुमवस्थाद्वयमुपन्यस्यति-

**सवस्तु सोपलम्भं च द्वयं लौकिकमिष्यते ॥**
**अवस्तु सोपलम्भं च शुद्धं लौकिकमिष्यते ॥ ८७ ॥**

सवस्त्विति ॥ संवृतिसता वस्तुना सह वर्तत इति सवस्तु । तथो-पलब्धिरुपलम्भस्तेन सह वर्तत इति सोपलम्भं च शास्त्रादिसर्व-व्यवहारास्पदं ग्राह्यग्राहकलक्षणं द्वयं लौकिकं लोकादनपेतं लौकिकं जागरितम्, एवँलक्षणं जागरितमिष्यते।वेदान्तेऽपि अवस्तु संवृतेरप्य-भावात् सोपलम्भं वस्तुवदुपलम्भोऽसत्यपि वस्तुनि तेन सह वर्तत इति सोपलम्भं च शुद्धं केवलं प्रविविक्तं जागरितात् स्थूलाल्लौकिकं सर्व-प्राणित्वादिष्यते स्वप्न इत्यर्थः । यद्धि प्रातिभासिकं व्यावहारिकं च स्थूलम् अर्थजातम् आदित्यादिदेवताऽनुगृहीतैरिन्द्रियैरुपलभ्यते तज्जागरितं बाह्येषु करणेषूपसंहृतेषु जाग्रद्वासनानुसारेण मनस-स्तत्तदर्थाभासाकारत्वभासनं स्वप्नशब्दितमिति फलितम् ॥ ८७ ॥

संप्रति सुषुप्तं दर्शयति—

**अवस्त्वनुपलम्भं च लोकोत्तरमिति स्मृतम् ॥**
**ज्ञानं ज्ञेयं च विज्ञेयं सदा बुद्धैः प्रकीर्तितम् ॥ ८८ ॥**

अवस्त्विति ॥ स्थूलं सूक्ष्मं च वस्तु विषयभूतं यत्र न विद्यते तत् तथा । इन्द्रियार्थसंप्रयोगजन्यो वा स्थूलार्थावगाही वासनात्मको वा यत्रोपलम्भो न सम्भवति तदशेषविशेषविज्ञानशून्यं सुषुप्तमिति विशिनष्टि ॥ अनुपलम्भं चेति ॥ अत एव लोकोत्तरं लोकातीतं कारणात्मना बुद्धेरवस्थानम् । ग्राह्यग्रहणविषयो हि लोकस्तदभावात् सुषुप्तं तादित्याह ॥ लोकोत्तरमिति ॥ साक्षिप्रत्यक्षत्वेन सर्वप्रवृत्तिबीजं सुषुप्तमित्येवं स्मृतं शास्त्रविद्भिरित्याह ॥ इतीति ॥
एवमवस्थात्रयं स्वप्रक्रिययोक्तम् । इदानीं ज्ञानज्ञेयविज्ञेयपदार्थान् तथैव क्रमेण वदँस्तत्र विद्वदनुभवं प्रमाणं कथयति ॥ ज्ञानमिति ॥ सोपायं परमाऽर्थतत्त्वं लौकिकं, शुद्धं लौकिकं, लोकोत्तरं क्रमेण येन ज्ञानेन ज्ञायतेतन्मनोवृत्तिरूपं ज्ञानमिति ज्ञेयमेतान्येव त्रीणि । एतद्व्यतिरेकेण ज्ञेयाऽनुपपत्तेः । सर्वप्रावादुककल्पितकार्यकारणवस्तुनोऽत्रैवावस्थात्रये नियमेनान्तर्भावादिति विज्ञेयम् । परमार्थसत्यं तुर्याख्यमद्वयमजमात्मतत्त्वमिति सदा सर्वदैतल्लौकिकादिविज्ञेयान्तं बुद्धैः परमार्थदर्शिभिर्ब्रह्मविद्भिः प्रकीर्त्तितमित्यर्थः ॥ ८८ ॥

आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवतीति श्रुत्या यत् प्रतिज्ञातं तदुक्तवस्तुज्ञाने फलतीति कथयति—

**ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम् ॥**
**सर्वज्ञता हि सर्वत्र भवतीह महाधियः ॥ ८९ ॥**

ज्ञाने चेति ॥ ज्ञाने च लौकिकादिविषये ज्ञेये च लौकिकादौ त्रिविधे पूर्वं,लौकिकं,तदभावेन पश्चाच्छुद्धं लौकिकं,तदभावेन लोकोत्तरमित्येवंक्रमेण स्थानत्रयाभावेन परमार्थसत्ये तुर्येऽद्वयेऽजे अभये विदिते सति स्वयमेवात्मस्वरूपमेव सर्वज्ञता सर्वश्चासौ ज्ञश्च सर्वज्ञस्तद्भावः सर्वज्ञता । इह जीवन्नेव जन्मनि महाधियो महाबुद्धेः सर्वलोकातिशयविषयबुद्धित्वादेवंविदः सर्वत्र सर्वदा भवति । सकृद्विदिते स्वरूपे स्फुरणस्य व्यभिचाराभावात् । न हि परमार्थविदो ज्ञानोद्भवाभिभवौ

स्तो यथाऽन्येषां प्रावादुकानामित्यर्थः ॥ ८९ ॥
अवस्थात्रयस्य ज्ञेयत्वनिर्देशात् परमार्थतास्तित्वमाशङ्क्य परिहरति-

हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणतः ॥
तेषामन्यत्र विज्ञेयादुपलम्भस्त्रिषु स्मृतः ॥ ९० ॥

हेयेति ॥ हेयानि लौकिकादीनि त्रीणि जागरितस्वप्नसुषुप्तानि आत्मन्यसत्त्वेन रज्ज्वां सर्पवद् हातव्यानि। ज्ञेयमिह चतुष्कोटिवर्जितं परमार्थतत्त्वम्। आप्यान्याप्तव्यानि त्यक्तबाह्यैषणात्रयेण भिक्षुणा पाण्डित्यबाल्यमौनाख्यानि साधनानि। विपाक्यानि रागद्वेषमोहादयो दोषाः कषायाख्यानि पक्तव्यानि। सर्वाण्येतानि हेयज्ञेयाप्यपाक्यानि भिक्षुणोपायत्वेनाग्रयाणतः प्रथमतो बोधात् पूर्वं तेषां हेयादीनामन्यत्र विज्ञेयात् परमार्थसत्यं विज्ञेयं, ब्रह्मैकं वर्जयित्वोपलम्भनमुपलम्भोऽविद्याकल्पनामात्रं हेयाप्यपाक्येषु त्रिष्वपि स्मृतो ब्रह्मविद्भिः। न परमार्थसत्यता त्रयाणामित्यर्थः ॥ ९० ॥
यदुक्तं ज्ञेयं चतुष्कोटिवर्जितं परमार्थतत्त्वमिति, तदिदानीं स्फुटयति-

प्रकृत्याऽऽकाशवज्ज्ञेयाः सर्वे धर्मा अनादयः ॥
विद्यते न हि नानात्वं तेषां क्वचन किञ्चन ॥ ९१ ॥

प्रकृत्येति ॥ प्रकृत्या स्वभावत आकाशवदाकाशतुल्याः सूक्ष्मनिरञ्जनसर्वगतत्वैः सर्वे धर्मा आत्मनो ज्ञेया मुमुक्षुभिरनादयो नित्या इत्यर्थः। बहुवचनकृतभेदाशङ्कां निराकुर्वन्नाह ॥ विद्यत इति ॥ क्वचन देशकालावस्थादौ किञ्चिदपि कार्यकारणांशांशित्वेनाणुमात्रमपि तेषां न विद्यते नानात्वमित्यर्थः ॥ ९१ ॥
ज्ञेयशब्दप्रयोगान्मुख्यमेव ज्ञेयत्वं प्राप्तं व्युदस्यति-

आदिबुद्धाः प्रकृत्यैव सर्वे धर्माः सुनिश्चिताः ॥
यस्यैवं भवति क्षान्तिः सोऽमृतत्वाय कल्पते ॥ ९२ ॥

आदिबुद्धा इति ॥ यस्मादादौ बुद्धा आदिबुद्धाः प्रकृत्यैव स्वभावत एव यथा नित्यप्रकाशस्वरूपः सवितैवं नित्यबोधस्वरूपाः सर्वे धर्माः सर्व आत्मानः। न च तेषां निश्चयः कर्तव्यो नित्यसुनिश्चितस्वरूपाः, न सन्दिह्यमानस्वरूपाः, एवं नैवं चेत्यतो ज्ञेयतौपचारिकीत्यर्थः। यथोक्तरीत्या समुत्पन्नज्ञानस्य फलमाह ॥ यस्येति ॥ यस्य मुमुक्षोरेवं

यथोक्तप्रकारेण भवति क्षान्तिः बोधकर्तव्यतानिरपेक्षता सर्वदा स्वात्मनि सोऽमृतत्वाय अमृतभावाय कल्पते मोक्षाय समर्थो भवतीत्यर्थः ॥ ९२ ॥

सोऽमृतत्वायेत्यादिवचनादागन्तुकममृतत्वं प्राप्तम्। तत् प्रत्युदस्यति–

आदिशान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः ॥
सर्वे धर्माः समाऽभिन्ना अजं साम्यं विशारदम् ॥९३॥

आदिशान्ता इति ॥ नित्यमेव शान्ता अनुत्पन्ना अजाश्च प्रकृत्यैव सुनिर्वृताः सुष्ठूपरतस्वभावा नित्यमुक्तस्वभावाः सर्वे धर्माः समाश्चाभिन्नाश्च समाभिन्ना इत्युक्तमेवार्थं चतुर्थपादेन सङ्क्षिप्य दर्शयति। अजमिति॥यस्मादजं साम्यं विशारदं विशुद्धमात्मतत्त्वं तस्माच्छान्तिर्मोक्षो वा नास्ति कर्तव्यम्। कृतकस्यानित्यत्वादित्यर्थः ॥ ९३ ॥

इदानीं मुमुक्षुप्ररोचनार्थमविद्वन्निन्दां दर्शयति–

वैशारद्यं तु वै नास्ति भेदे विचरतां सदा ॥
भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः ॥९४॥

वैशारद्यं त्विति ॥ यस्माद्भेदनिम्ना भेदानुयायिनः संसारानुगाः पृथग्वादाः। पृथग् नानावस्त्वित्येवं वदनं येषां ते पृथग्वादा द्वैतिनस्तस्मात्ते कृपणाः क्षुद्राः स्मृताः। यस्माद्वैशारद्यं विशुद्धिर्नास्ति तेषां भेदे विचरतां द्वैतमार्गे अविद्याकल्पिते सर्वदा वर्तमानानामतो युक्तमेव तेषां कार्पण्यमित्यर्थः ॥ ९४ ॥

यदिदं परमार्थतत्त्वं तदमहात्मभिरपण्डितैर्वेदान्तबहिष्ठैः क्षुद्रैरल्पप्रज्ञैरनवग्राह्यमित्यविद्वन्निन्दां प्रदर्श्य तद्विपरीतैस्तु ग्राह्यमिति विद्वत्प्रशंसां प्रसारयति–

अजे साम्ये तु ये केचिद्भविष्यन्ति सुनिश्चिताः ॥
ते हि लोके महाज्ञानास्तच्च लोको न गाहते ॥ ९५ ॥

अज इति॥जन्मवर्जिते परिपूर्णे परमार्थतत्त्वे ये केचित् स्त्र्यादयोऽपि सुनिश्चिता भविष्यन्तिचेत् त एव हि लोके महाज्ञानाः महति निरतिशयतत्त्वविषये असम्भावनादिरहितनिश्चितज्ञानवत्त्वान्महानुभावा भवन्तीत्यर्थः। ननु तत्त्वविषयज्ञानस्य सर्वलोकसाधारण-

त्वात्तत्त्वज्ञानवतां किमिति प्रशंसा प्रस्तूयते, तत्राह ॥ तच्चेति ॥ तेषां वर्त्म तेषां विदितं परमार्थतत्त्वं सामान्यबुद्धिरन्यो लोको न गाहते, नावतरति, न विषयीकरोतीत्यर्थः ॥ ९५ ॥

अजं साम्यमित्युक्तं प्रमेयं, तद्विषयनिश्चयवान् प्रमाता, प्रमाणं तथाविधनिश्चयज्ञानमिति वस्तुपरिच्छेदे कथं महाज्ञानत्वमित्याशङ्क्याह—

**अजेष्वजमसंक्रान्तं धर्मेषु ज्ञानमिष्यते ॥**
**यतो न क्रमते ज्ञानमसङ्गं तेन कीर्तितम् ॥ ९६ ॥**

अजेष्विति ॥ अजेष्वनुत्पन्नेष्वचलेषु धर्मेष्वात्मसु चित्प्रतिबिम्बेष्वजमचलं च ज्ञानमिष्यते सवितरीवौष्ण्यं प्रकाशश्च यतस्तस्मादसंक्रान्तमर्थान्तरे ज्ञानं बिम्बकल्पं ब्रह्माचलमात्मभूतमभ्युपगम्यते । तथाच मानमेयादिभावस्य कल्पितत्वेऽपि वस्तुपरिच्छेदाभावादुपपन्नं तज्ज्ञानवतां महाज्ञानत्वमित्यर्थः । किञ्चास्मिन्मते ज्ञानस्य यदसङ्गत्वमङ्गीकृतं तदपि विषयाभावादेव सिद्ध्यति । ततश्च मुक्तौ निर्विषयं मन इति यदुच्यते तदप्यविरुद्धमित्याह ॥ यतो नेति ॥ यस्मान्न क्रमतेऽर्थान्तरे ज्ञानं तेन कारणेनासङ्गं तत् कीर्तितमाकाशकल्पमित्युक्तमित्यर्थः ॥ ९६ ॥

कूटस्थं ब्रह्मैव तत्त्वमिति स्वमते ज्ञानमसङ्गं सिद्ध्यतीत्युक्तम् । मतान्तरे पुनः सविषयत्वाज्ज्ञानस्यासङ्गत्वमसङ्गतमासज्ज्येतेत्याह—

**अणुमात्रेऽपि वै धर्मे जायमानेऽविपश्चितः ॥**
**असङ्गता सदा नास्ति किमुताऽऽवरणच्युतिः ॥ ९७ ॥**

अणुमात्रेऽपीति ॥ इतोऽन्येषां वादिनामणुमात्रेऽल्पेऽपि वै धर्मे वस्तुनि बहिरन्तर्वा जायमाने उत्पद्यमाने स्वीकृते अविपश्चितोऽविवेकिनोऽसङ्गता असङ्गत्वं सदा नास्ति, किमु वक्तव्यमावरणच्युतिर्बन्धनाशो नास्तीत्याह ॥ किमिति ॥ ९७ ॥

तेषामावरणच्युतिर्नास्तीति ब्रुवता स्वसिद्धान्तेऽभ्युपगतं तर्हि धर्माणामावरणं ? नेत्युच्यते—

**अलब्धावरणाः सर्वे धर्माः प्रकृतिनिर्मलाः ॥**
**आदौ बुद्धास्तथा मुक्ता बुद्ध्यन्त इति नायकाः ॥ ९८ ॥**

अलब्धेति ॥ अलब्धमप्राप्तमावरणमविद्यादिबन्धनं येषां ते धर्मा अलब्धावरणाः बन्धनरहिताः प्रकृतिनिर्मलाः स्वभावशुद्धा आदौ बुद्धास्तथा मुक्ताः, यस्मान्नित्यशुद्धबुद्धमुक्तस्वभावास्तस्मादविद्वद्दृष्ट्यैवाविद्यावरणं, न तत्त्वदृष्ट्या सिद्ध्यतीत्यर्थः । आत्मनो यथोक्तस्वभावत्वे बोद्धृत्वं न सिद्ध्यतीत्यनित्यबोधेषु तद्भावादित्याशङ्क्याऽऽह ॥ बुध्यन्त इति ॥ नायकाः स्वामिनः समर्था बोद्धृबोधशक्तिमत्स्वभावा इत्यर्थः । यथा नित्यप्रकाशस्वरूपोऽपि सविता प्रकाशत इत्युच्यते, यथावा नित्यनिवृत्तगतयोऽपि नित्यमेव शैलास्तिष्ठन्तीत्युच्यते, तथा बोधस्वरूपा अपि धर्मा बुध्यन्त इत्यौपचारिकं बोद्धृत्वं सिद्ध्यतीत्यर्थः ॥ ९८ ॥

किमिति मुख्ये बोद्धृत्वे संभाविते,तदेव नेष्टमित्याशङ्क्य, ज्ञानस्य विद्वद्दृष्ट्या विषयसंबन्धासंभवादित्याह—

**क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तायिनः ॥**
**सर्वे धर्मास्तथा ज्ञानं नैतद् बुद्धेन भाषितम् ॥ ९९ ॥**

क्रमत इति ॥ यद्याकाशकल्पस्य परमार्थदर्शिनस्तदनन्यत्वादाकाशकल्पं ज्ञानं तन्न क्रमते क्वचिदपि विषयान्तरे, किन्तु सवितरि प्रकाशवदात्मन्येव प्रतिष्ठितं यस्मादिष्यते तस्मान्नास्मिन् मुख्यं बोद्धृत्वं सेद्धुमर्हतीति । यदादावुपन्यस्तं, ज्ञानेनाकाशकल्पेनेत्यादि तदिदमुपसंहृतमित्यर्थः । किञ्च जीवानां ब्रह्मात्मना विभुत्वादाकाशवत् क्रियासमवायाऽयोगान्न मुख्यं बोद्धृत्वं सेद्धुमलमित्याह ॥ सर्वे इति ॥ सर्वे धर्मा आत्मानोऽपि तथा ज्ञानादेवाकाशकल्पत्वान्न क्रमन्ते क्वचिदप्यर्थान्तरेऽतो गत्यभावादेव न मुख्यं बोद्धृत्वं तेषामित्यर्थः । ज्ञानमात्रं पारमार्थिकं, तत्रैव ज्ञातृज्ञेयादिकल्पितमिति सौगतमतमेव भवताऽपि संगृहीतमित्याशङ्क्याह ॥ ज्ञानमिति ॥ ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वमद्वयमेतन्न भाषितं बुद्धेन । यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामीप्यमुक्तम्, इदं तु परमार्थतत्त्वमद्वैतं वेदान्तेष्वेव विज्ञेयमिति कुतो मतसाङ्कर्याशङ्कावकाशमासादयतीत्यर्थः ॥ ९९ ॥

शास्त्रसमाप्तौ परमार्थतत्त्वस्तुत्यर्थं नमस्कार उच्यते—

दुर्दर्शमतिगम्भीरमजं साम्यं विशारदम् ॥
बुद्ध्वा पदमनानात्वं नमस्कुर्मो यथाबलम् ॥ १०० ॥

इति श्रीगौडपादाचार्यभगवतः कृतिषु आगमग्रन्थे
उपदेशग्रन्थे वेदान्तमूले माण्डूक्योपनिषत्-
कारिकाः संपूर्णाः ॥ ॐ तत्सत् ॥

दुर्दर्शमिति ॥ दुःखेन दर्शनमस्येति दुर्दर्शम् अस्तिनास्तीतिचतु-ष्कोटिवर्जितत्वाद् दुर्विज्ञेयम्।अत एवातिगम्भीरं दुष्प्रवेशं महासमुद्र-वद् अकृतप्रज्ञैः अजं साम्यं विशारदम् ईदृक् पदमनानात्वं नाना-त्ववर्जितं बुद्ध्वाऽवगम्य तद्भूताः सन्तो नमस्कुर्मस्तस्मै पदाय। अव्यवहार्यमपि मायाशक्त्या व्यवहारगोचरतामापाद्य यथाबलं यथा-शक्तीत्यर्थः ॥ १०० ॥

इति श्रीगौडपादीयवार्तिकवृत्तौ श्रीमत्परमहंसपरिव्राजकाचार्य-
स्वयम्प्रकाशानन्दसरस्वतीस्वामिकृतायां मिताक्षरायां
चतुर्थं प्रकरणम् ॥ ४ ॥

हरिः ॐम् ।

# अथ माण्डूक्योपनिषत् ।

श्रीशंकरानन्दभगवत्कृतदीपिकाख्यव्याख्यासहिता ।

---

हरिः ॐम् । ॐमित्येतदक्षरमिदꣳ सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव । यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥ १ ॥

---

माण्डूक्योपनिषद्व्याख्यां करिष्ये पदचारिणीम् ॥
ॐमात्माभेदसम्बोधादानन्दात्मप्रकाशिनीम् ॥ १ ॥

नामनामिनोर्लोके भेदस्याप्रसिद्धत्वाद्वस्तुतश्चोङ्कारस्य ब्रह्मविवर्तत्वाद्विवर्तानां च विवर्ताधिष्ठानेन भेदशून्यत्वादत ॐङ्कारं ब्रह्मनामधेयं ब्रह्मदृष्ट्याऽऽह ॥ ॐम् ॥ अवति ब्रह्मबुद्ध्या दृष्टो द्रष्टॄनित्योम् ॥इति, ॐङ्कारानुकरणार्थः ॥एतत् ॥ उक्तमोङ्काररूपं जगत्पर्णस्य शङ्कुस्थानीयं ब्रह्मणा तादात्म्यं प्राप्तं ब्रह्मणो विकारो नामधेयं च ॥ अक्षरम् , वर्णात्मकम् ॥इदं विविधप्रत्ययगम्यं चेतनाचेतनात्मकं जगत् सर्वं निखिलं तस्य सर्वात्मकस्योंकारस्योपव्याख्यानमुप सामीप्येन विस्पष्टमा समन्तात्कथनमुक्तार्थविवरणमित्यर्थः ॥ भूतमतीतं भवद्वर्तमानं भविष्यदनागतमित्यनेन प्रकारेण सर्वं निखिलमोंकार एव प्रणव एव, न त्वन्यत् ॥ यच्च यदपि प्रसिद्धं सदसदात्मकमन्यदुक्ताद्व्यतिरिक्तं त्रिकालातीतमुक्तकालत्रयासंस्पृष्टं तदप्युक्तं ब्रह्म नरविषाणादिकमपि । अपिशब्दः पूर्वेण समुच्चयमाह ॥ ॐङ्कार एव ॥ व्याख्यातम् ॥ १ ॥

सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात् ॥ २ ॥

जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥ ३ ॥

---

ओँङ्कारस्य ब्रह्मणो नामधेयत्वादिसंव्याप्तिरित्यभिप्रायेण आह ॥ सर्वं निखिलं हि निश्चितमेतत्प्रपञ्चजातं ब्रह्म सत्यज्ञानादिलक्षणं बृहत् । जडस्यैव ब्रह्मात्मत्वमुक्तं, न चेतनस्येति-शङ्कानिराकरणार्थमाह ॥ अयमनुभूयमान आत्माऽस्मत्प्रत्ययालम्बनश्चेतनस्त्वम्पदार्थः । ब्रह्मोक्तं तत्पदार्थः । स कार्यकारणभावमन्तरेण ब्रह्मणा तादात्म्यं प्राप्तोऽयमात्मा व्याख्यातम् । चतुष्पाच्चत्वारः पादा यस्य स चतुष्पात् ॥ २ ॥

गौरिव किं चतुष्पादित्याशङ्क्य नेत्याह ॥ जागरितस्थानो जागरितं स्थानं यस्य स जागरितस्थानः ॥ बहिःप्रज्ञो बहीरूपादौ चक्षुरादिग्राह्ये प्रज्ञा यस्य स बहिःप्रज्ञः ॥ सप्ताङ्गः सप्तसंख्याकानि द्युसूर्यवाय्वाकाशरयिपृथिव्याहवनीयाख्यानि मूर्धचक्षुःप्राणशरीरान्तर्भागमूत्राशयपादास्यान्यङ्गानि यस्य स सप्ताऽङ्गः ॥ एकोनविंशतिमुखः, पञ्चज्ञानकर्मेन्द्रियप्राणान्तःकरणचतुष्टयरूपाणि मुखान्येकोनविंशतिसंख्याकानि यस्य स एकोनविंशतिमुखः ॥ स्थूलभुक्, स्थूलं रूपादिकं भुङ्क्त इति स्थूलभुक् ॥ वैश्वानरो विश्वेषामयं नरो विश्वे वा नरा यस्य विश्वश्चासौ नरश्चेति वा विश्वानरः, स एव वैश्वानरः । अथवा विश्वेषां नरशब्दवाच्यानां चतुर्विधानां स्थूलानां देहानामधिष्ठाताऽयं वैश्वानरः प्रथमः पादः । आत्मनोऽयं सर्वैः सुकरावगमत्वात् प्रथमोंऽशः ॥ ३ ॥

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ४ ॥

यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवाऽऽनन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ ५ ॥

---

इदानीं द्वितीयं पादमाह ॥ स्वप्नस्थानः स्वप्नं जागरितवासनाजन्यं स्थानं यस्य स स्वप्नस्थानः ॥ अन्तःप्रज्ञोऽन्तर्मानसवासनाविलासे प्रज्ञा बुद्धिर्यस्य सोऽन्तःप्रज्ञः ॥ सप्ताङ्ग एकोनविंशतिमुखः ॥ व्याख्यातम् । प्रविविक्तभुक्प्रविविक्तं सूक्ष्मं भुङ्क्त इति प्रविविक्तभुक् । तैजसस्तेजोऽन्तःकरणं कर्तृकरणकार्यादिभावेन परिणतं तदेव स्थूलशरीरादिहीनं यस्य स तैजसः। अन्तःकरणस्य स्वामीत्यर्थः। जागरितानन्तरभावित्वात् ॥ द्वितीयः पादः ॥ स्पष्टम् ॥ ४ ॥

इदानीं तृतीयं पादं वक्तुमाह ॥ यत्र यस्मिन् काले सुप्त उपरतेन्द्रियग्रामो, न कञ्चन कामं कामयते कमपि पुण्यपापहेतुभूतं पुत्रक्षेत्रादिकं नाभिलषति ॥ न कञ्चन स्वप्नं पश्यति कमपि शुभमशुभं वासनाविलासं नावलोकयति ॥ तत् कामाकामनस्वप्नानवलोकनरूपं सुषुप्तं गाढनिद्राप्राप्तिस्थानम् ॥ सुषुप्तस्थानः ॥ सुषुप्तं स्वयं श्रुत्या व्याख्यातं स्थानं यस्य स सुषुप्तस्थानः ॥ एकीभूतः सर्वजगद्बीजभूतस्याऽऽवरणात्मकस्याज्ञानस्यानुपरमादनेकोऽप्यन्तःकरणविक्षेपोपरमादेकतां गतः, प्रज्ञानघन एव प्रज्ञानमात्मनो रूपं ब्रह्मणा भेदरहितं स्वयंप्रकाशं तस्य घनः पिण्ड इव स एव न त्वन्तःकरणादिबाह्यं च । न च निरानन्द इत्याह ॥ आनन्द-

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः
सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ ६ ॥

नान्तःप्रज्ञं न बहिष्प्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञंनाप्रज्ञम्।अदृष्टमव्यवहार्यमग्राह्यमलक्षणमाचिन्त्य-

---

मयो,विक्षेपाणामुपरमादावरणस्यानुवृत्तेश्च स्वरूपानन्दप्रचुरो, हि यस्मात्तस्मादानन्दभुगानन्दो विक्षेपाभावोपलक्षित आत्मा तमेव भुङ्क्तेऽज्ञानवृत्तिभिरवगच्छतीत्यानन्दभुक् ॥ चेतोमुखः, चेत आत्मस्वरूपबोधः स एवाऽऽवरणशक्तिसहितो मुखं यस्य स चेतोमुखः ॥ प्राज्ञः प्रकृष्टे स्वयम्प्रकाश आनन्दात्मनि साज्ञाने ज्ञप्तिरज्ञानवृत्तिरूपो बोधो यस्य स प्रज्ञः प्रज्ञ एव प्राज्ञः। उक्तावस्थाद्वयाभावेनाऽवगम्यमानत्वात् ॥ तृतीयः पादः । स्पष्टम् ॥ ५ ॥

इदानीं प्राज्ञं प्रस्तौति सर्वकारणत्वात्तस्य॥एष उक्तः प्राज्ञः सर्वेश्वरः सर्वनियामकः ॥ एष प्राज्ञः सर्वज्ञः सर्वश्चासौ ज्ञश्चेति सर्वकार्यात्मकत्वादज्ञानस्य वा जानातीति सर्वज्ञः ॥ एष प्राज्ञोऽन्तर्यामी अन्तर्यमयिता एष प्राज्ञो, योनिः कारणं, सर्वस्य निखिलस्य चेतनाचेतनात्मकस्य जगतः ॥ योनित्वे हेतुमाह ॥ प्रभवाप्ययावुत्पत्तिविनाशौ हि यस्माद् भूतानां चेतनाचेतनरूपाणामितो भवत इति शेषः ॥ ६ ॥

इदानीं तुरीयं पादमाह॥नान्तःप्रज्ञं, न मानसवासनाविलासदर्शनलालसं, न बहिःप्रज्ञं नेन्द्रियैर्विषयावलोकनपरं,नोभयतःप्रज्ञं जागरणस्वप्नान्तरालावस्थावबोधशून्यं, न प्रज्ञानघनं न ज्ञानमात्रबोधं, न प्रज्ञं निर्विकल्पबोधशून्यं,नाप्रज्ञं न बोधाभावरूपम् ॥ अदृष्टं प्रत्यक्षादिप्रमाणैरनवलोकितम् ॥ अव्यवहार्यं वचनादानादिव्यवहारगन्धरहितम् ॥अग्राह्यं सर्वप्रकारग्रहणायोग्यम् ॥अलक्षणं गन्ध-

मव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥७॥

सोऽयमात्माऽध्यक्षरमोंकारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति ॥ ८ ॥

---

वत्त्वादिबोधशून्यम् ॥ अचिन्त्यम् अन्तःकरणवृत्त्यविषयभूतम् ॥ अव्यपदेश्यं पृथिवीत्यादिव्यपदेशवद् व्यपदेशायोग्यम् ॥ एकात्मप्रत्ययसारं सर्वाद्वैतप्रत्ययः सारभूतोऽवगतिहेतुत्वेन यस्मिंस्तदेकात्मप्रत्ययसारं, वाङ्मनसातीतमप्यात्मबोधेनावगन्तुं शक्यमित्यर्थः ॥ प्रपञ्चोपशमं प्रपञ्चस्य कार्यकारणात्मकस्योपशमोऽभावो यस्मिंस्तत्प्रपञ्चोपशमम् । शान्तं स्पष्टम्॥शिवं स्वयम्प्रकाशमानन्दाऽऽत्मस्वरूपत्वान्मङ्गलम् ॥ अद्वैतम् आनन्दात्मव्यतिरिक्तशून्यं, चतुर्थं तुरीयं पादं मन्यन्ते संख्याशून्यमपि पूर्वापेक्षयाऽवगच्छन्ति ॥ स वस्तुतस्त्वतुरीयरूपोऽप्यविद्यया चतुष्पादात्माऽऽनन्दात्माऽस्मत्प्रत्ययव्यहारयोग्यः, स तुरीयरूपोऽपगतसमस्तविशेषो विज्ञेयो विशेषेण साक्षात्कर्तव्यः ॥ ७ ॥

इदानीमात्मोङ्कारयोरभेदं कण्ठत आह॥सोऽयमात्मा ॥ व्याख्यातम् ॥अध्यक्षरम् अक्षराण्यकारोकारमकारार्धमात्राख्यानि स्वपादसम्मितान्यधिकृत्य वर्तत इत्यध्यक्षरम् ॥ ॐकार ॐकारस्वरूप ॐकारस्याऽऽत्मस्वरूपत्वे साम्यम् ॥ अधिमात्रम् अकाराद्याश्चतस्रो मात्रा विश्वादिपादसमसंख्याका अधिकृत्य अधिमात्रम् । आत्मोंकारयोरभेदे कारणमाह ॥ पादा विश्वतैजसप्राज्ञतुरीयाख्या, मात्रा अकारोकारमकारार्धमात्राः । तादात्म्यं दृढीकर्तुमुक्तं विपर्ययेण निर्दिशति ॥ मात्राश्च पादाः । चकार एवकारार्थः । नायं विपर्ययनिर्देशस्त्वमहमितिवदुपचारार्थः, किन्तु घटः

जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राऽऽप्तेरादिमत्त्वाद्वाऽऽप्नोति ह वै सर्वान् कामानादिश्च भवति य एवं वेद ॥ ९ ॥

---

कलशः कलशो घट इतिवन्निरुपचरितं मात्राणां पादानां च तादात्म्यमित्येवकारार्थः । व्याख्यातमन्यत् । अर्धमात्रायास्तुरीयपादरूपत्वात्तुरीयस्य च पूर्वपादत्रयादत्यन्तवैलक्षण्यादतोऽर्धमात्रां परित्यज्य शेषमात्रा आह॥अकार उकारो मकारः॥ स्पष्टम्॥ इति मात्रात्रयनिर्देशार्थः ॥ ८ ॥

इदानीं विभागेन मात्राणां पादरूपतामाह ॥ जागरितस्थानो वैश्वानरोऽकारः, प्रथमा मात्रा पूर्वा मात्रा ॥ व्याख्यातमन्यत् । अकारस्य पूर्वमात्रात्व उपपत्तिमाह ॥ आप्तेर्व्याप्तेः । अकारो हि जागरितस्थानादिकं सर्वमाप्नोति ॥ प्रकारान्तरेण पुनर्निरुक्तिमाह ॥ आदिमत्त्वाद्वा ॥ अ आ इ इत्येवमादिरादिःस यस्मिन्नस्ति सोऽयमादिमांस्तस्य भाव आदिमत्त्वमादिसामान्यवत्त्वमित्यर्थः । प्रथमपादोऽपि यथा पादानामादिरत एव तत्सामान्यवानाप्नोति चेतरत्पादजातं पूर्वभावित्वात् । वाशब्दः पक्षान्तरार्थः । विश्वाकारयोरैक्यमाप्तेर्वाऽऽदिमत्त्वाद्वेत्यर्थः । इदानीं विश्वाकारयोराप्त्याऽऽदिमत्त्वज्ञानात् फलमाह ॥ आप्नोति प्राप्नोति हि प्रसिद्धान् वै स्मर्यमाणान् सर्वान्निखिलान् कामान् काम्यमानान् पुत्रक्षेत्रादीन्।आप्तेः फलमुक्त्वाऽऽदिमत्त्वस्य फलमाह ॥ आदिश्च स्वानां मध्ये सर्वेषु कार्येषु प्रथमगण्यः । चकारादपि प्रथमं फलं भवति । स्पष्टम् ॥ यस्य फलं तमाह ॥ यः पादमात्रातादात्म्यज्ञ,एवमुक्तेन प्रकारेणोक्तयोः पादमात्रयोः सामान्यं वेद जानाति स आप्नोतीत्यन्वयः ॥ ९ ॥

